# रामायणम् ।

## आरण्यकाण्डम् ।

महर्षिवाल्मीकिप्रणीतम् ।

रामानुज-कृत-टीका-समेतम् ।

श्रीयुक्त द्वारकानाथभञ्जमहानुभावस्याभ्यनुज्ञया।

श्रीहेमचन्द्र भट्टाचार्य्येण

संशोधितं, भाषान्तरितं प्रकाशितञ्च ।

कलिकाताराजधान्यां

रामायणयन्त्रे

श्रीत्रैलोक्यनाथ विद्यारत्नेन मुद्रितम् ।

शकाब्दाः १७९५ ।

# रामायणम् ।



## आरण्यकाण्डम् ।

### प्रथमः सर्गः ।

प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।
रामो ददर्श दुर्धर्षं तापसाश्रममण्डलम् ॥ १ ॥

अथ ऋषिदर्शितवर्त्मना रामस्य दण्डकारण्यप्रवेशमाह,—प्रविश्येति । ऋषिदर्शितवर्त्मनेति शेषः । दण्डकारण्यं तत्संज्ञकं महारण्यम् । दण्डकस्य राज्ञो देशः शुक्रशापवशादरण्यमभूत् ततः प्रभृति दण्डकारण्यसंज्ञा तस्य । प्रायेण महाराष्ट्रदेशोऽयम् । आत्मवान् स्वायत्तचित्तः । दुर्धर्षो द्विषद्भिरप्रधृष्यः दुर्धर्षमिति पाठे रक्षोयुक्तत्वादशक्यप्रवेशमित्यर्थः । मण्डलं समूहः ॥ १ ॥

कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम्।
यथा प्रदीप्तं दुर्दर्शं गगने सूर्य्यमण्डलम्॥ २॥
शरण्यं सर्वभूतानां सुसंमृष्टाजिरं सदा।
मृगैर्बहुभिराकीर्णं पक्षिसंघैः समावृतम्॥ ३॥
पूजितञ्चोपनृत्तञ्च नित्यमप्सरसां गणैः।
विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः॥ ४॥
समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम्।
आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम्॥ ५॥
बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम्।

आश्रममण्डलं वर्णयति,—कुशेति। परिक्षिप्तं व्याप्तम्। ब्राह्मी लक्ष्मीः ब्रह्मविद्याभ्यासजनितस्तेजोविशेषः। तत्समावृतत्वादेव गगने प्रदीप्तं दुर्दर्शं रक्तआदिभिर्दृष्टुमशक्यं सूर्य्यमण्डलं यथा तथा भुवि स्थितम्॥ २॥

शरण्यं वासायार्हं सर्वत्राणार्हञ्च सुसंमृष्टाजिरं अलंकृतप्राङ्गनम्॥ ३॥

अप्सरसां गणैरुपनृत्तं उप समीपे कृतनर्त्तनम् अतिमनोरमदेशत्वात् अतएव तैः पूजितञ्च। अग्निशरणैरग्निहोत्रगृहैः स्रुगादिभिर्यज्ञोपकरणैश्च शोभितम्॥ ४॥

आरण्यैररण्यभवैः॥ ५॥

बलिहोमार्चितं वैश्वदेवहोमबलिहरणैः सत्कृतं ब्रह्मघोषो वेदघोष-

पुष्पैश्चान्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ६ ॥
फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः।
सूर्य्यवैश्वानराभैश्च पुराणैर्मुनिभिर्युतम् ॥ ७ ॥
पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः।
तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् ॥ ८ ॥
ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम्।
तद्दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ॥ ९ ॥
अभ्यगच्छन् महातेजा विज्यं कृत्वा महद्धनुः।
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ॥ १० ॥
अभिजग्मुस्तदा प्रीता वैदेहीञ्च यशस्विनीम्।

तेन निनादितं संजातनिनादम्। पद्मिनी सरः सपद्मया पद्मपुष्पयुक्तया ॥ ६ ॥

पुराणैर्वृद्धैः ॥ ७ ॥

ब्रह्मभवनं ब्रह्मलोकः ब्रह्मघोषो वेदघोषः ॥ ८ ॥

ब्रह्मविद्भिः सर्वत्र ब्रह्मानन्यत्वज्ञानवद्भिः ब्राह्मणैरुक्तलक्षणैरन्वर्थब्राह्मणैस्तादृशैर्युक्तत्वादेव ब्रह्मभवनप्रख्यत्वम् आश्रमस्य ॥ ९ ॥

वीज्यम् अवरोपितगुणम्। आश्रमवर्त्तिमृगादित्रासनिवृत्त्यर्थमिति भावः। दिव्यज्ञानोपपन्ना आदिगुर्वंवतारो रामो रावणादीन् हनिष्यतीत्येवं ज्ञानयुक्ताः ॥ १० ॥

ते रामं सीताञ्च चाल्लक्ष्मणञ्च दृष्ट्वा प्रीता अभिजग्मुः आभिमुख्येन

ते तु सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणम् ॥ ११ ॥
लक्ष्मणञ्चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् ॥
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढ़व्रताः ॥ १२ ॥
रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् ।
ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १३ ॥
वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव ।

जग्मुः । उद्यन्तं सोममिव तद्वत् प्रियदर्शनम् । सोमो ब्राह्मणानां राजेति श्रुतेः । स्वकुलरक्षकसोमराजमिव स्वरक्षकं धर्मचारिणं रामं दृष्ट्वा लक्ष्मणं यशस्विनीं पातिव्रत्ययशोवतीं रक्षःकुलसंहारजयशोवतीञ्च सीतां दृष्ट्वा । अतएवाग्रे रक्षणप्रार्थनोपपद्यते । मङ्गलानि आशीर्वादान् प्रत्यगृह्णन् स्वरक्षकेष्टदेवताबुद्ध्या प्रतिगृहीतवन्तः ॥ ११ ॥ १२ ॥

रूपसंहननम् । अङ्गान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यत इति लक्षितं रूपं तदुक्तं। संहननम् आपादकेशं सुश्लिष्टसन्धिबन्धः । अङ्गप्रत्यङ्गकानाञ्च सन्निवेशो यथोचितम् । सुश्लिष्टसन्धिबन्धोयस्तत्सौन्दर्यमिहोच्यते इत्युक्तलक्षणं सौन्दर्यम् । लक्ष्मीं कान्तिं लावण्यं मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तन्निगद्यते । सौकुमार्यं परचित्तग्राहितालक्षणं मार्दवं वा । विस्मितानामद्भुतवस्तुदर्शनवतां य आकारो मुखप्रसादविस्फारितेक्षणत्वादिरूपस्तथाविधाकारा विस्मितचित्ता इति यावत् । वनवासिन इति रामविशेषणम् । तादृशस्यापीदृशरूपादित्वाश्चर्यम् ॥१३॥

तदेवाह,—वैदेहीमिति । अनिमिषैर्निमेषरहितैः आश्चर्यभूतान्

आश्चर्यभूतान् ददृशुः सर्वे ते वनवासिनः ॥ १४ ॥

अत्रैनं हि महाभागाः सर्व्वभूतहिते रताः।

अतिथिं पर्णशालायां राघवं सन्नवेशयन् ॥ १५ ॥

ततो रामं सुसत्कृत्य विधिना पावकोपमाः।

आजिह्रुस्ते महाभागाः सलिलं धर्मचारिणः ॥ १६ ॥

मङ्गलानि प्रयुंजाना मुदा परमया युताः।

मूलं पुष्पं फलं वन्यमाश्रमञ्च महात्मनः ॥ १७ ॥

निवेदयित्वा धर्मज्ञास्ते तु प्रांजलयोऽब्रुवन्।

धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः ॥ १८ ॥

पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः।

रूपादिभिर्विस्मयप्रापकान् सर्वे ते वनवासिनः ऋषयो मृगादयश्च। तद्दर्शनानन्दविच्छेदभयेन च निमेषराहित्यम् ॥ १४ ॥

अत्राश्रममण्डले। अतिथिं न्यायतः पूजार्हं पर्णशालायां प्राति-स्विक्यम् ॥ १५ ॥

रामस्य सत्कृत्येति कर्मणः शेषत्वविवक्षायां षष्ठी। भवद्दर्शना-दिभिर्वयं धन्या इत्यादिप्रियवचनैः सत्कृत्य सलिलं सलिलादिपूजा-द्रव्यम् आजह्रुः रामपूजार्थमिति शेषः ॥ १६ ॥

आश्रमञ्च स्ववासस्थानभूतं प्राञ्जलयः निजकुलदेवतावतारत्वात्। अन्यथा हि क्षत्रिये ब्राह्मणाञ्जलिकरणस्यानौचित्यं स्यात् ॥ १७ ॥ १८ ।

पूजनीयो देवताबुद्ध्या पालकत्वेन गुरुत्वाद्वा मान्यो राजबुद्ध्या सन्

इन्द्रस्यैव चतुर्भागः प्रजा रक्षति राघव ! ॥ १९ ॥
राजा तस्माद्वरान् भोगान् अन्यान् भुङ्क्ते नमस्कृतः ।
ते वयं भवता रक्ष्या भवद्विषयवासिनः ॥ २० ॥
नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ।
न्यस्तदण्डा वयं राजन् ! जितक्रोधा जितेन्द्रियाः ॥ २१ ॥
रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः ।

काराहः । दण्डधरो दुष्टनिग्रहकर्त्ता सर्वलोकप्रसिद्धम् पूजाहेतुमाह,—इन्द्रस्येति । इन्द्रस्याशेषयागपूज्यस्य चतुर्भागः चतुर्थोऽंशः । यद्वा इन्द्रस्य परमात्मनो विष्णोश्चतुर्थोऽंशः । एवकारेण न यस्य कस्यापि देवतासामान्यस्येति सूचितम् ॥ १९ ॥

क्रुद्धेवाह,—राजेत्यादि । नमस्कृतो लोकैरिति शेषः । एवं राजमात्रस्याप्येवंविधत्वे साक्षाद्भगवतस्तवैवंविधत्वमिति किमु वक्तव्यमिति ध्वनिः । ते वयं ऋषयः रक्ष्यत्वे हेतुर्भवद्विषयवासिन इति । विषयो देशः । सार्वभौमवत्त्वात् दण्डकारण्यमपि तद्देश एवेति भावः । विष्णवतारत्वात् सर्वा देशस्तवैवेति गूढोऽभिप्रायः ॥ २० ॥

ननु वनस्थेन बलहीनेन मया कथं भवन्तो रक्ष्यास्तत्राह,—नगरस्थ इति । नगरमयोध्या । त्वं नो राजा रक्षकः । राजा जनेश्वर इत्याभ्यामिहामुत्र च त्वमेव रक्षकः सर्वशक्तिसम्पन्नस्य नगरवनवासाभ्यामुपचयापचययोरभावादिति ध्वनितम् । ननु महाप्रभावानां कुतो रक्षकान्तरापेक्षेत्यत आह,—न्यस्तेति । त्यक्तभूतनिग्रहाः तत्र हेतुर्जितक्रोधाः तपोनाशभयात् ॥ २१ ॥

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ।
वन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २२ ॥
तथान्ये तापसाः सिद्धा रामं वैश्वानरोपमम् ॥
न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रामादीनां
दण्डकारण्यप्रवेशो नाम प्रथमः सर्गः ॥ १ ॥

अतो रक्षितव्याः गर्भभूताः यथा मातुर्गर्भे प्राप्तो जीवो मात्रा रक्ष्यते तद्वद्भवद्भ्या इत्यर्थः । अन्यैर्नीवारादिभिर्विविधाहारैः । सलक्ष्मण-मित्यनेन लक्ष्मणस्याप्याहारभक्षणं सूचमुक्तम् ॥ २२ ॥

अन्ये सिद्धाः सङ्कल्पसिद्धाः न्यायो धर्मस्तदनुरुद्धं वृत्तं चरित्रं येषां ते । यथान्यायम् ईश्वरार्हपदार्थोपस्थापनेनेश्वरं तर्पयामासुः ॥२३॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

# द्वितीयः सर्गः ।



कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति ।
आमन्त्र्य स मुनीन् सर्वान् वनमेवान्वगाहत ॥ १ ॥
नानामृगगणाकीर्णं ऋक्षशार्दूलसेवितम् ।
ध्वस्तवृक्षलतागुल्मं दुर्दर्शसलिलाशयम् ॥ २ ॥
निष्कूजमानशकुनि झिल्लिकागणनादितम् ।
लक्ष्मणानुचरो रामो वनमध्यं ददर्श ह ॥ ३ ॥
सीतया सह काकुत्स्थस्तस्मिन्घोरमृगायुते ।
ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४ ॥
गभीराक्षं महावक्त्रं विकटं विकृतोदरम् ।

उदयं प्रति उदयकाले अन्वगाहत प्राविशत् ॥ १ ॥

ध्वस्तवृक्षलतागुल्मं विराधसञ्चारवशादिति शेषः । दुर्दर्शसलिलाशयम् उक्तहेतुवशादेव ॥ २ ॥

निष्कूजमानाः शकुनयो यत्र तत् । विराधभयादेवम् । झिल्लिकागणमात्रशब्दयुतं वनमध्यं ददर्शेति संबन्धः ॥ ३ ॥

घोरमृगाः तरक्ष्वादयः पुरुषादं राक्षसम् ॥ ४ ॥

गभीराक्षं महाकूपवदगाधचक्षुषं विकटं विशालं बीभत्सं कुत्सितं

वीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम्॥ ५ ॥
वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम्।
त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम्॥ ६ ॥
त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृकौ पृषतान्दश।
सविषाणं वसादिग्धं गजस्य च शिरो महत्॥ ७ ॥
अवसज्यायसे शूले विनदन्तं महास्वनम्।
स रामं लक्ष्मणञ्चैव सीतां दृष्ट्वा च मैथिलीम्॥ ८ ॥
अभ्यधावत्सुसंक्रुद्धः प्रजाः काल इवान्तकः।
स कृत्वा भैरवं नादं चालयन्निव मेदिनीम्॥ ९ ॥
अङ्केनादाय वैदेहीमपाक्रम्य तदाब्रवीत्।

विषमं निम्नोन्नतसंस्थानम्। विकृतं वक्ष्यमाणधर्मैर्विपरीतवेषम् अतएव घोरदर्शनम्॥ ५ ॥

वसा मांसान्तर्गतस्नेहः। व्यादितास्यं व्यात्तास्यमित्यर्थः॥ ६ ॥

पृषताः बिन्दुयुक्ताः मृगाः॥ ७ ॥

भक्षणार्थं सिंहादीन् आयसे शूलेऽवसज्य महास्वनं यथा तथा विनदन्तम्॥ ८ ॥

कालेयुगान्तकाले क्रुद्धोऽन्तकः प्रजा अभि उद्दिश्य यथा धावति तथा अभ्यधावत्॥ ९ ॥

अङ्केन कटिप्रदेशेन सभार्यौ भार्याशब्दो योषिन्मात्रवाची। एकया योषिता सहितौ। यद्वा विराधस्येदं निन्दोक्तिरूपमेव वाक्यम्॥१०॥

युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ॥ १० ॥
प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ।
कथं तापसयोर्वाञ्च वासः प्रमदया सह ॥ ११ ॥
अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ।
अहं वनमिदं दुर्गं विराधो नाम राक्षसः ॥ १२ ॥
चरामि सायुधो नित्यमृषिमांसानि भक्षयन्।
इयं नारी वरारोहा मम भार्य्या भविष्यति ॥ १३ ॥
युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे।
तस्यैवं ब्रुवतो दुष्टं विराधस्य दुरात्मनः ॥ १४ ॥
श्रुत्वा सगर्वितं वाक्यं संभ्रान्ता जनकात्मजा।
सीता प्रावेपतोद्वेगात् प्रवाते कदली यथा ॥ १५ ॥
तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम्।
अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १६ ॥

तदेवाह,—कथमिति। प्रमदया एकया सह द्वयोर्वासः कथञ्चेत्यन्वयः ॥ ११ ॥

अतएवाह। अधर्मचारिणौ मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणात् एकभार्य्यारक्षत्वाच्च। अतएव पापौ। तयोर्भीत्युत्पादनाय विराधः स्वयमेव स्वस्वरूपमाह। अहमिति ॥ १२ ॥ १३ ॥

मृधे युद्धे ॥ १४ ॥

सगर्वितं भावे निष्ठा सगर्वमिति यावत्। उद्वेगात् भयात् ॥ १५ ॥

पश्य सौम्य ! नरेन्द्रस्य जनकस्यात्मसम्भवाम्।
मम भार्य्यां शुभाचारां विराधाङ्के प्रवेशिताम्॥ १७॥
अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम्।
यदभिप्रेतमस्मासु प्रियं वरवृतञ्च यत्॥ १८॥
कैकेय्यास्तु सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण !।
या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी॥ १९॥
ययाहं सर्वभूतानां प्रियः प्रस्थापितो वनम्।
अद्येदानीं सकामा सा या माता मध्यमा मम॥ २०॥

परिशुष्यता शोकसंकुचितेन मुखेनोपलक्षित इव॥ १६॥
प्रवेशितां विराधेनेति शेषः॥ १७॥

अस्मासु विषये यद्दुःखं कैकेय्या वने सम्पादनीयतयाभिप्रेतं यत् स्वप्रियं वरवृत्तञ्च [वरव्याजेन वृत्तं] तत् क्षिप्रमद्यैव सुसंवृत्तं सिद्धम्। या पुत्रार्थे पुत्रप्रयोजननिमित्तं राज्येन राज्याभिषेकमात्रेण न तुष्यति दीर्घदर्शिनी अस्मन्नाशेन स्वपुत्रस्य चिरं राज्यं पश्यन्ती॥ १८॥ १९॥

यया दीर्घदर्शिन्या सर्वभूतहितोऽहं वनमपि प्रस्थापितः। पितृराज्यदानाय या मे मध्यमा माता कौशल्यातः कनिष्ठत्वात् सुमित्रातो ज्येष्ठत्वात् सा अद्यदिवसे इदानीमस्मिन् काले सकामा जाता। कौसल्यापेक्षया कनिष्ठत्वात् पूर्वं यवीयसीत्युक्तिरपि नासङ्गता। तीर्थस्तु कौसल्यासुमित्राभ्यां कनीयसी इतरदशरथपत्नीभ्यो ज्येष्ठेत्याह, भगवतोऽपीदृशोक्तिस्तु लक्ष्मणोत्साहवर्धनायेति शेषः॥ २०॥

परस्पर्शात् तु वैदेह्या न दुःखतरमस्ति मे।
पितुर्विनाशात् सौमित्रे! स्वराज्यहरणात्तथा॥ २१॥
इति ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुतः।
अब्रवील्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन्॥ २२॥
अनाथ इव भूतानां नाथस्त्वं वासवोपमः।
मया प्रेष्येण काकुत्स्थ! किमर्थं परितप्यसे॥ २३॥
शरेण निहतस्यास्य मया क्रुद्धेन रक्षसः।
विराधस्य गतासोर्हि मही पास्यति शोणितम्॥ २४॥
राज्यकामे मम क्रोधो भरते यो बभूव ह।

तदर्थमेव पुनरप्याह,—परेति। पितुर्मरणात् स्वराज्यहरणादधिकदुःखजनको वैदेहीपरस्पर्शः इतोऽधिकं दुःखजनकं तु न मे किञ्चित् इति दुःखातिशयो व्यङ्ग्यः॥ २१॥

बाष्पशोकाभ्यां नेत्रचित्तगताभ्यां परिप्लुतो व्याप्तस्तथा क्रुद्धः कैकेयीं प्रति विराधं प्रति च रुद्धो नाग इव आहितुण्डिकेन मन्त्ररुद्धः पेटीरुद्धो वा सर्प इवेत्यर्थः। श्वसन् रामविषाददर्शनेन॥ २२॥

अनाथ इव नाथापेक्षः प्राणी नाथरहितः सन् यथा शोचति तद्वत्। कीदृशस्त्वं भूतानां सर्वजीवानां नाथस्त्राता तेन तस्य नाथनिरपेक्षत्वं ध्वनितं तदुपपादकमेव वासवोपम इत्यपि। मया प्रेष्येण युक्त इति शेषः॥ २३॥

किं त्वया शक्यं तत्राह,—शरेणेति॥ २४॥

तं विराधं विमोच्यामि वज्री वज्रमिवाचले ॥ २५ ॥

मम भुजबलवेगवेगितः
पततु शरोऽस्य महान्महोरसि ।
व्यपनयतु तनोश्च जीवितं
पततु ततश्च महीं विघूर्णितः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे विराधेन सीताग्रहणं नाम द्वितीयः सर्गः ॥ २ ॥

विराधं मोच्यामि भरतेन राज्याकामनायाः प्रदर्शितत्वात् तमुपेच्य ॥ २५ ॥

भुजबलवेगेन धनुष्कर्षणवेगेन वेगितः आहितवेगः । महीं पततु विराध इति शेषः । विघूर्णितः संजातभ्रमणः ॥ २६ ॥

इति श्री रामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः।

* अथोवाच पुनर्वाक्यं विराधः पूरयन् वनम्।
पृच्छतो मम हि ब्रूतं कौ युवां क्व गमिष्यथः॥ १॥
तमुवाच ततो रामो राक्षसं ज्वलिताननम्।
पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः॥ २॥
क्षत्रियौ वृत्तसम्पन्नौ विद्धि नौ वनगोचरौ।
त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान्॥ ३॥

अथेति। वनं पूरयन्नित्यस्य शब्देनेति शेषः। युवयोः स्वरूपं पृच्छते मह्यं ब्रूतम्। लोण्मध्यमद्विवचनम्। प्रश्नप्रकारः काविल्यादि॥ १॥

ज्वलिताननं राक्षसत्वान्मुखनिःसृताग्निज्वालया आत्मनः इक्ष्वाकुसंबन्धिकुलमुवाचेत्यर्थः॥ २॥

क्षत्रियौ इक्ष्वाकुवंशजाविति शेषः। वनगोचरौ। बहुव्रीहिः। कुतश्चिद्धेतोरिति शेषः॥ ३॥

---

* "इत्युक्त्वा लक्ष्मणः श्रीमान् विराधं प्रहसन्निव।
को भवान् वनमभ्येत्य चरिष्यति यथासुखम्॥"

इत्यतिरिक्तं पाश्चात्त्याः।

तमुवाच विराधस्तु रामं सत्यपराक्रमम्।
हन्त वक्ष्यामि ते राजन्! निबोध मम राघव!॥ ४॥
पुत्रः किल जवस्याहं माता मम शतह्रदा।
विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः॥ ५॥
तपसा चाभिसंप्राप्ता ब्रह्मणो हि प्रसादजा।
शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च॥ ६॥
उत्सृज्य प्रमदामेनामनपेक्षौ यथागतम्।
त्वरमाणौ पलायेथां न वां जीवितमाददे॥ ७॥
तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः।
राक्षसं विकृताकारं विराधं पापचेतसम्॥ ८॥
क्षुद्र! धिक् त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम्।

निबोध मम वचनान्मम स्वरूपमिति शेषः॥ ४॥

जवस्य जवनाम्नः॥ ५॥

लोके प्राणिलोके शस्त्रेण शस्त्रसामान्येन। किञ्च अच्छेद्याभेद्यत्वं प्राणवियोजनाय छेदभेदाशक्यगात्रत्वञ्च प्राप्तमित्यर्थः॥ ६॥

यदेवमत उत्सृज्येत्यादि। अनपेक्षौ। प्रमदाशया युद्धाशया च रहितौ वां युवयोः॥ ७॥ ८॥

हीनार्थं परदारस्पर्शलक्षणहीनकर्मकरम्। अतएव त्वां धिक्। मृत्युमन्वेषसे ध्रुवम्। उक्तदुष्कर्मकरणादिति शेषः। तञ्च मृत्युं रणे सम्यक् प्राप्स्यसि तिष्ठ क्षणमिति शेषः॥ ९॥

रणे प्राप्स्यसि संतिष्ठ न मे जीवन् विमोक्ष्यसे ॥ ९ ॥
ततः सज्यं धनुः कृत्वा रामः सुनिशितान् शरान्।
सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ॥ १० ॥
धनुषा ज्यागुणवता सप्तबाणान् मुमोच ह।
रुक्मपुंखान् महावेगान् सुपर्णानिलतुल्यगान् ॥ ११ ॥
ते शरीरं विराधस्य भित्वा बर्हिणवाससः।
निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ॥ १२ ॥
स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः।
अभ्यद्रवत् सुसंक्रुद्धस्तदा रामं सलक्ष्मणम् ॥ १३ ॥
स विनद्य महानादं शूलं शक्रध्वजोपमम्।
प्रगृह्याशोभत तदा व्यात्ताननं इवान्तकः ॥ १४ ॥

अभिसन्धाय धनुषीति शेषः ॥ १० ॥

ज्यागुणवता ज्यारूपरज्जुमता ज्याशब्दवतेति वा सुपर्णानिलाभ्यां तुल्यं गच्छन्ति तान् ॥ ११ ॥

बर्हिणवाससः बर्हिणो मयूरास्तत्संबन्धिबर्हवासस इत्यर्थः। शोणितादिग्धाः रक्तलिप्ताः ॥ १२ ॥

स विद्धोऽपि रामबाणताड़ितोऽपि वरदानमाहात्म्यादगतासुर्व्यथामात्रेण वैदेहीं हित्वा शूलमुद्यम्याभ्यद्रवत् ॥ १३ ॥

महानादं विनद्य कृत्वा शक्रध्वजोपमं दैर्घ्येण स्थौल्येन च व्यात्ताननो विवृताननः ॥ १४ ॥

अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः ।
विराधे राक्षसे तस्मिन् कालान्तकयमोपमे ॥ १५ ॥
स प्रहस्य महारौद्रं स्थित्वाऽजृम्भत राक्षसः ।
जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ॥ १६ ॥
स्पर्शात् तु वरदानेन प्राणान् संरोध्य राक्षसः ।
विराधः शूलमुद्यम्य राघवावभ्यधावत ॥ १७ ॥
तच्छूलं वज्रसंकाशं गगने ज्वलनोपमम् ।
द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥ १८ ॥
तद्रामविशिखैश्छिन्नं शूलं तस्यापतद् भुवि ।

कालान्तकयमाः प्राणतनुमनःसंहारप्रधानाः संहाररुद्रस्य मूर्त्तयस्तत्सदृशे * ॥ १५ ॥

प्रहस्य शस्त्रावध्ये मयि वृथैषां बाणपात इति हासः । ते बाणाः रामलक्ष्मणविसृष्टाः जृम्भणेन शरीरलग्ना अपि कायान्निर्जग्मुः । आशुगाः शीघ्रगा इत्यर्थे केवलं यौगिकम् ॥ १६ ॥

स्पर्शात् तु वरदानेन वरदानसंबन्धादित्यर्थः । संरोध्य धृत्वा परमदुःखं प्राप्नोऽप्यपीति शेषः ॥ १७ ॥

तच्छूलं करस्थमूलभागमेवेति शेषः । गगने ज्वलनोपमम् शिखाभागावच्छेदेनेति भावः ॥ १८ ॥

---

* कालः अन्तकः यमश्चेति त्रयो मरणाधिकारिणः तत्र कालस्याधिकारो जीवितविच्छेदे अन्तकस्य प्राणापहारे यमस्य पुण्यापुण्यविवेके इति ।

पपाताशनिना च्छिन्नं मेरोरिव शिलातलम् ॥ १९ ॥
तौ खड्गौ चिप्रमुद्यम्य कृष्णसर्पोपमौ शुभौ।
तूर्णमापततुस्तस्य तदा प्रहरतां बलात् ॥ २० ॥
स वध्यमानः सुभृशं भुजाभ्यां परिगृह्य तौ।
अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ॥ २१ ॥
तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत्।
वहत्वयमलं तावत् पथानेन तु राक्षसः ॥ २२ ॥
यथा चेच्छति सौमित्रे! तथा वहतु राक्षसः।
अयमेव हि नः पन्था येन याति निशाचरः ॥ २३ ॥
स तु स्वबलवीर्य्येण समुत्क्षिप्य निशाचरः।
बालाविव स्कन्धगतौ चकारातिबलोद्धतः * ॥ २४ ॥

अशनिर्वज्रम् ॥ १९ ॥
तदा आपतनकाल एव प्रहरतां [प्राहरताम्] इत्यर्थः ॥ २० ॥
भुजाभ्यां परिगृह्य एकैकेनैकैकम् ॥ २१ ॥
तस्याभिप्रायं काननान्तर्नयनविषयम् ॥ २२ ॥
यथेच्छति तथा वहतु यथास्येष्टं भवति तथा वहतु अनेन निर्भयत्वं दर्शितम्। तत्र हेतुमाह,—अयमेवेति ॥ २३ ॥

---

* "चकारातिबलो ततः" इति वा पाठः।

तावारोप्य ततः स्कन्धं राघवौ रजनीचरः ।
विराधो विनदन् घोरं जगामाभिमुखो वनम् ॥ २५ ॥

वनं महामेघनिभं प्रविष्टो
द्रुमैर्महद्भिर्विविधैरुपेतम् ।
नानाविधैः पक्षिकुलैर्विचित्रं
शिवायुतं व्यालमृगैर्विकीर्णम् ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे विराधेन रामलक्ष्मणहरणं नाम तृतीयः सर्गः ॥ ३ ॥

स्कन्धारोपयामास ॥ २४ ॥ २५ ॥
शिवायुतं शिवाभिर्युतम् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

# चतुर्थः सर्गः ।

ह्रियमाणौ तु काकुत्स्थौ दृष्ट्वा सीता रघूत्तमौ ।
उच्चैःस्वरेण चुक्रोश प्रगृह्य सुमहाभुजौ * ॥ १ ॥
एष दाशरथी रामः सत्यवान् बलवान् शुचिः ।
रक्षसा रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २ ॥
मामृक्षा भक्षयिष्यन्ति शार्दूलद्वीपिनस्तथा ।
मां हरोत्सृज्य काकुत्स्थौ नमस्ते राक्षसोत्तम ! ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ ।
वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ॥ ४ ॥
तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह ।

सुमहान्तौ स्वभुजौ प्रगृह्य उद्यम्य ॥ १ ॥
क्रोशनप्रकारमाह । एष इति ॥ २ ॥
शार्दूलद्वीपिनः सचिन्द्रबिन्दुव्याघ्राः मां हर ते नम इत्युक्तिः रामलक्ष्मणयोः प्रेमातिशयत्वात् ॥ ३ ॥
वेगं त्वराम् ॥ ४ ॥

---

* "सुभुजा भुजौ" इति वा पाठः ।

रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५ ॥
स भग्नबाहुः संविग्नः पपाताशु विमूर्च्छितः ।
धरण्यां मेघसंकाशो वज्रभिन्न इवाचलः ॥ ६ ॥
मुष्टिभिर्बाहुभिः पद्भिः सूदयन्तौ तु राक्षसम् ।
उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥ ७ ॥
सुविद्धो बहुभिर्बाणैः खड्गाभ्याञ्च परिक्षतः ।
निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८ ॥
तं प्रेक्ष्य रामः सुभृशमवध्यमचलोपमम् ।
भयेष्वभयदः श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥
तपसा पुरुषव्याघ्र ! राक्षसोऽयं न शक्यते ।
शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १० ॥

बाहुं बभञ्ज नैतावतापि प्राणहानिरिति न वरदानविरोधः अभेद्याच्छेद्यत्वञ्च प्राणप्रद्धानावयवविशेषपरं बोध्यम् । बभञ्ज मुष्टिप्रहारेणेति शेषः । अभेद्याच्छेद्यत्ववरस्तु शस्त्रकरणकतद्विषय इत्यन्ये ॥ ५ ॥

संविग्नः खिन्नः ॥ ६ ॥

सूदयन्तौ हिंसन्तौ ॥ ७ ॥

न ममार वरदानबलादिति भावः ॥ ८ ॥

भयेषु भयकालेषु अभयदः स्तगुणादिश्रवणस्मरणकीर्त्तनादिना ॥९॥

कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण ! ।
* वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रवर्चसः ॥ ११ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति ।
तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्य्यवान् ॥ १२ ॥
तच्छ्रुत्वा राघवेणोक्तं राक्षसः प्रश्रितं वचः ।
इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ १३ ॥
हतोऽहं पुरुषव्याघ्र ! शक्रतुल्यबलेन वै ।
मया तु पूर्वं त्वं मोहान्न ज्ञातः पुरुषर्षभ ! ॥ १४ ॥
कौसल्यासुप्रजास्तात ! रामस्त्वं विदितो मया ।
वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥ १५ ॥
अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् ।

निखनावहे भूमौ गर्त्ते पातयावहे ॥ १० ॥ ११ ॥
प्रदरो गर्त्तः कण्ठे आक्रम्य गर्यमिव ॥ १२ ॥
प्रश्रितं शापान्तकालप्राप्तेः प्रश्रयप्राप्तिः ॥ १३ ॥
प्रदरकरणरूपप्राणान्तव्यापारात् पूर्वं रामस्त्वमिति न ज्ञातः ॥१४॥
इदानीं कथं ते ज्ञानं तत्राह,—कौसल्येत्यादि । त्वया कौसल्या सुप्रजा इति त्वं विदितः कौसल्यापुत्र इति ज्ञातोसीत्यर्थः । एवञ्च कौसल्यायामीश्वरोऽवतीर्णः । वैदेही च लक्ष्मीः । लक्ष्मणश्च तवांश इति सूचितम् ॥ १५ ॥

* "महतोऽस्य महच्छ्वभ्रं" इति वा पाठः ।

तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन हि ॥ १६ ॥
प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः ।
यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥ १७ ॥
तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति ।
अनुपस्थीयमानो मां स क्रुद्धो व्याजहार ह ॥ १८ ॥
इति वैश्रवणो राजा रम्भासक्तमुवाच ह ।
तव प्रसादान्मुक्तोऽहमभिशापात् सुदारुणात् ॥ १९ ॥
भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परन्तप ! ।
इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ २० ॥
अध्यर्धयोजने तात ! महर्षिः सूर्य्यसन्निभः ।

एवं ज्ञाने कारणमाह,—अभिशापादिति । तुम्बुरुरहं वैश्रवणेन शप्तः । तस्माच्छापात् राक्षसीं तनुं प्रविष्टोऽतो मे ज्ञानशक्तिरस्तीत्यर्थः ॥ १६ ॥ १७ ॥

प्रकृतीं गान्धर्वीम् । शापतत्क्रोधकारणमाह, अनुपस्थीयमानः अवसरेऽसेव्यमानः । व्याजहारेत्यस्य राक्षसीं तनुं प्रविशेति शेषः ॥ १८ ॥

अनुपस्थाने कारणमाह, इतीति । उक्तं शापं तत्प्रतीकारञ्चोवाचेत्यर्थः । शापमुक्तिकालजानन्दपारवश्यात् पुनरुक्तिर्न दोषाय । रम्भासक्तं पुरानघेति पाठे पुनरुक्त्यभाव एव ॥ १९ ॥

स्वं भुवनं स्वं लोकं भवनमिति पाठान्तरम् ॥ २० ॥

तं चिप्रमभिगच्छ त्वं स ते श्रेयोऽभिधास्यति ॥ २१ ॥
अवटे चापि मां राम ! निक्षिप्य कुशली व्रज ।
रक्षसां गतसत्वानामेष धर्मः सनातनः ॥ २२ ॥
अवटे ये निधीयन्ते तेषां लोकाः सनातनाः ।
एवमुक्त्वा तु काकुत्स्थं विराधः शरपीड़ितः ॥ २३ ॥
बभूव स्वर्गसंप्राप्तो न्यस्तदेहो महाबलः ।
तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २४ ॥
कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण ! ।
वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥ २५ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति ।

अध्यर्धयोजने सार्धयोजने ॥ २१ ॥

गतसत्वानां गतप्राणानां सनातनः परम्पराप्राप्तः । अतएव कलिराक्षसेषु यवनेष्वेतद्धर्मप्रवृत्तिः ॥ २२ ॥

उक्तमेव विवृणोति । अवटे इति ॥ २३ ॥

न्यस्तदेहोऽवटनिक्षिप्तदेहः । स्वर्गसंप्राप्तः संप्राप्तस्वर्ग इत्यर्थः । बभूव तथा भवितुमुद्यतो बभूवेत्यर्थः । यद्वा बभूवेत्यर्द्धेन संक्षिप्तयोक्तस्य विस्तरमाह, तच्छ्रुत्वेति । अवटनिक्षेपेण स्वर्गप्राप्तिं श्रुत्वा ॥२४॥

कुञ्जरस्येव निखननार्थमिवेत्यर्थः । खन्यतामिति शीघ्रमिति शेषः । ममातर्कितस्यैतन्मरणोपायस्यानेनापि कथनान्निश्चितत्वेन शीघ्रता कार्य्येत्याशयः ॥ २५ ॥

तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्य्यवान्॥ २६

ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम्।

अखनत् पार्श्वतस्तस्य विराधस्य महात्मनः॥ २७॥

तं मुक्तकण्ठमुत्क्षिप्य शङ्कुकर्णं महास्वनम्।

विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम्॥ २८॥

तमाहवे निर्जितमाशुविक्रमौ

स्थिरावुभौ संयति रामलक्ष्मणौ।

मुदान्वितौ चिक्षिपतुर्भयावहं

नदन्तमुत्क्षिप्य बलेन राक्षसम्॥ २९॥

अवध्यतां प्रेक्ष्य महासुरस्य तौ

शितेन शस्त्रेण तदा नरर्षभौ।

पादेन कण्ठे आक्रम्य तस्थौ श्वभ्राद्दूरे परिलुण्ठनव्यावृत्त्यर्थम्॥२६॥

विराधस्य महात्मनः। महात्मनो महाशरीरस्य। गन्धर्वत्वप्रत्यापत्त्यभिप्रायेण रामस्वरूपज्ञानाभिप्रायेण च कविना महात्मन इति प्रयुक्तं वा॥ २७॥

मुक्तकण्ठं श्वभ्रे क्षेपणार्थं रामेण मुक्तकण्ठाक्रमणम्। शङ्कुवत्कठिनकर्णं उत्क्षिप्य चालयित्वा महास्वनत्वादेव भैरवस्वनत्वं यथातथा धन्योऽहमतिधन्योऽहमिति नदन्तं श्वभ्रे प्राक्षिपत्॥ २८॥

आशुविक्रमौ क्षिप्रकारिणौ। संयति स्थिरौ दृढचित्तौ। आहवे निर्जितं बलेनोत्क्षिप्य सञ्चाल्य गर्त्ते चिक्षिपतुः॥ २९॥

समर्थ्य चात्यर्थविशारदावुभौ
बिले विराधस्य वधं प्रचक्रतुः ॥ ३० ॥
स्वयं विराधेन हि मृत्युरात्मनः
प्रसह्य रामेण यथार्थ*मीप्सितः ।
निवेदितः काननचारिणा स्वयं
न मे वधः शस्त्रकृतो भवेदिति ॥ ३१ ॥
तदेव रामेण निशम्य भाषितं
कृता मतिस्तस्य बिलप्रवेशने ।

अवध्यतां शस्त्रेणावध्यतां प्रेक्ष्य । असह्यतामिति पाठेऽप्यवध्यतामित्येवार्थः । प्रेक्ष्य विचार्य समर्थ्य बिलं संपाद्य तत्र बिले वधं प्रचक्रतुः मृत्तुपूरणेनेति शेषः ॥ ३० ॥

उक्तमेवार्थमुपसंहरति,—स्वयमिति । यथार्थं स्वप्रयोजनोचितं रामेण कर्त्रा प्रसह्य स्वय स्वस्य यो मृत्युरीप्सितस्तमात्मनो मृत्युं प्रसह्य उद्दिश्य । प्रपद्येति पाठेऽप्ययमेवार्थः । काननचारिणा विराधेन मे वधः शस्त्रकृतो न भवेदिति निवेदितोऽभूत् राम इति शेषः † ॥ ३१ ॥

तदेवभाषितं विराधोक्तं शस्त्रेण मे न मृत्युरित्येवं रूपम् ॥ ३२ ॥

* "वधार्थम्" इति वा पाठः ।

† स्वयं प्रसह्य अवबद्धा बिले निक्षिप्य काननचारिणा रामेण वधार्थं न मे वधः शस्त्रकृतो भवेदिति आत्मन ईप्सितो मृत्युर्विराधेन स्वयं निवेदित इति सम्बन्धः बिलप्रक्षेपार्थं शस्त्रवधं निषिद्ध्य ईप्सितो बिलप्रवेशवधो विराधेन स्वयं निवेदित इत्यर्थः ।

श्लिष्टं तेनातिबलेन रक्षसा
प्रवेश्यमानेन वनं विनादितम्॥ २२ ॥
प्रहृष्टरूपाविव रामलक्ष्मणौ
विराधमुर्व्यां प्रदरे निपात्य तम्।
ननन्दतुर्वीतभयौ महावने
दिवि स्थितौ चन्द्रदिवाकराविव *॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
विराधवधो नाम चतुर्थः सर्गः ॥ ४ ॥

प्रहृष्टरूपाविव। इवशब्द एवार्थे। दिवि स्थितौ चन्द्रदिवाकराविव महावने विजह्रतुः। नीलत्वाद्विशालत्वाच्च वनस्याकाशसादृश्यम्। उभावपि चन्द्रवत् कलासम्पन्नौ सूर्य्यवत्प्रतापयुतौ॥ २३ ॥

* "शिलाभिरन्तर्दधतुश्च राक्षसम्।" इति वा पाठः।
ततस्तु तौ काञ्चनचित्रकार्मुकौ
निहत्य रक्षः परिगृह्य मैथिलीम्।
विजह्रतुस्तौ मुदितौ महावने
दिवि स्थितौ चन्द्रदिवाकराविव॥"
इत्यधिकं पाश्चात्याः पठन्ति।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे चतुर्थः सर्गः॥ ४ ॥

## पञ्चमः सर्गः ।

हत्वा तु तं भीमबलं विराधं राक्षसं वने ।
ततः सीतां परिष्वज्य समाश्वास्य च वीर्य्यवान् ॥ १ ॥
अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ।
कष्टं वनमिदं दुर्गं न चास्मो वनगोचराः ॥ २ ॥
अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ ३ ॥
तस्य देवप्रभावस्य तपसा भावितात्मनः ।
समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ ४ ॥
विभ्राजमानं वपुषा सूर्य्यवैश्वानरप्रभम् ।
रथप्रवरमारूढ़माकाशे विबुधानुगम् ॥ ५ ॥

समाश्वास्य समाश्वास्येव विराधाद्भीतामिति शेषः ॥ १ ॥
इदं वनं कष्टं पीड़ाजनकं दुर्गं विषमं क्रमणायोग्यञ्च वयं चेतः पूर्वं कदापि वनगोचरा न स्मः कदापीदृशं वनं न दृष्टं यस्मात् ॥ २ ॥
अतः शीघ्रं शरभङ्गं गच्छामहे गच्छाम इत्यर्थः इत्युक्तेति शेषः ॥३॥
भावितः शुद्ध आत्मा यस्य तस्य समीपे महदद्भुतं ददर्श ॥ ४ ॥

असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ।
सुप्रभाभरणं देवं विरजोम्बरधारिणम् ॥ ६ ॥
तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः ।
हरितैर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥ ७ ॥
ददर्श दूरतस्तस्य तरुणादित्यसन्निभम् ।
पाण्डुराभ्रघनप्रख्यं चन्द्रमण्डलसन्निभम् ॥ ८ ॥
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ।
चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने ॥ ९ ॥
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।
गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ १० ॥
अन्तरिक्षगतं देवं गीर्भिरग्र्याभिरैडयन् ।

तदेवाह,—विभ्राजमानमिति । वपुषा वपुःकान्त्या । विबुधानुगं देवानुचरं बहुशोभिः ॥ ५ ॥

वसुधामसंस्पृशन्तं रथादवरुह्यापीति शेषः । विबुधेश्वरं शक्रम् । अतिशयप्रभावदाभरणं विरजस्कमम्बरं धर्तुं शीलं यस्य तम् ॥ ६ ॥

तद्विधैस्तद्विधाभरणादिमद्भिः हरितैः श्यामवर्णैस्ताद्दशं रथञ्च ददर्श ॥ ७ ॥

पाण्डुराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तत् ॥ ८ ॥

चामरव्यजने वालव्यजने । रुक्मं स्वर्णम् । महाधने रत्नयतत्वात् बहुमूल्ये ॥ ९ ॥ १० ॥ ११ ॥

सह सम्भाषमाणे तु शरभङ्गेन वासवे ॥ ११ ॥
दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत्।
रामोऽथ रथमुद्दिश्य भ्रातुर्दर्शयताद्भुतम् ॥ १२ ॥
अर्चिष्मन्तं श्रिया जुष्टमद्भुतं पश्य लक्ष्मण !।
प्रपतन्तमिवादित्यमन्तरिक्षगतं रथम् ॥ १३ ॥
ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः।
अन्तरिक्षगता दिव्यास्तइमे हरयो ध्रुवम् ॥ १४ ॥
इमे च पुरुषव्याघ्र ! ये तिष्ठन्त्यभितो दिशम् *।
शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १५ ॥
विस्तीर्णविपुलोरस्काः परिघायतबाहवः।
शोणांशुवसनाः सर्वे व्याघ्रा इव दुरासदाः ॥ १६ ॥

उक्तलक्षणे वासवे शरभङ्गेन संभाषमाणेतु तं शतक्रतुं दृष्ट्वा ज्ञात्वा रामोऽब्रवीत् उक्तस्यैव प्रपञ्चो रामोऽथेति। उद्दिश्य हस्तेन निर्दिश्य। दर्शयत अदर्शयतेत्यर्थः ॥ १२ ॥ १३ ॥

पुरु बहु यथा तथा यज्वभिराहूयते यागायेति पुरुहूतः नः अस्माभिः ॥ १४ ॥

शतं शतं अष्टदिक्ष्विति शेषः। शतशब्दोऽनन्तवाची ॥ १५ ॥

विस्तीर्णविपुलानि अतिशयेन विशालानि उरांसि येषां ते।

---

* "रथम्" इति वा पाठः।

उरोदेशेषु सर्व्वेषां हारा ज्वलनसन्निभाः ।
रूपं बिभ्रति सौमित्रे ! पञ्चविंशतिवार्षिकम् ॥ १७ ॥
एतद्धि किल देवानां वयो भवति नित्यदा ।
यथेमे पुरुषव्याघ्रा दृश्यन्ते प्रियदर्शनाः ॥ १८ ॥
इहैव सह वैदेह्या मुहूर्त्तं तिष्ठ लक्ष्मण ! ।
यावज्जानाम्यहं व्यक्तं क एष द्युतिमान् रथे ॥ १९ ॥
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति ।
अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ २० ॥
ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः ।

आयतं दीर्घं शोणांशूनि शोणप्रभानि वसनानि येषाम् । शोणाभ्रवसना इति पाठे पद्मरागसदृशवसना इत्यर्थः । शोणांश्वित्येव प्राचीनः पाठ इति कतकः ॥ १६ ॥

ज्वलनसन्निभाः दीप्तिमात्रेण ॥ १७ ॥

एतद्धि पञ्चविंशतिवर्षप्रमाणकम् । नित्यदेत्यार्षं ये इमे देवाः यथा यादृशशुभदर्शनवयस्का दृश्यन्ते एतदेवैषां नित्यदा वय इति पूर्व्वेण सम्बन्धः ॥ १८ ॥

यावज्जानामि ज्ञास्यामि तावत्तिष्ठेत्यन्वयः । क एष रथे इन्द्रत्वेनानुमितोऽपि प्रमाणान्तरेणापि ज्ञातव्य इत्यर्थः ॥ १९ ॥

उक्तानुवादपूर्वं व्यापारान्तरोपदेशस्तमेवमित्यादि । इहैव स्थीयतामित्येवमुक्तेत्यर्थः ॥ २० ॥

शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत् ॥ २१ ॥
इहोपयात्यसौ रामो यावन्मां नाभिभाषते।
निष्ठां नयत तावत्तु ततो माद्रष्टुमर्हति ॥ २२ ॥
जितवन्तं कृतार्थं हि तदाहमचिरादिमम् *।
कर्म ह्यनेन कर्त्तव्यं महदन्यैः सुदुष्करम् ॥ २३ ॥
अथ वज्री तमामन्त्र्य मानयित्वा च तापसम्।
रथेन हययुक्तेन ययौ दिवमरिन्दमः ॥ २४ ॥

अनुज्ञाप्य गमनाय कृतानुमतिकं कृत्वा ॥ २१ ॥

यावदसौ मां नाभिभाषते तावन्मां निष्ठां स्थानान्तरं स्वर्गं वा नयत मया सह गच्छत। ततो वनचारित्वाद्धेतोर्मां मां अद्रष्टुमर्हति द्रष्टुं नार्हतीत्यर्थः। अ इति निषेधार्थमव्ययं पृथक्पदम्। विपदीवस्थितेनैवं वैभवस्य दर्शनमनुचितमित्यर्थः ॥ २२ ॥

कृतार्थं निस्तीर्णविपदं जितवन्तं रावणमिति शेषः। तदा वैभवयुक्तमिमं द्रक्ष्यामीति शेषः। कतकस्त्वेतत् पद्यं प्रक्षिप्तमित्याह। तद्-वयैव मन्नीत्याव्याख्याने सर्वसामञ्जस्यात्। रामो यावन्मां नाभिभाषते तावत् कर्मणो रावणवधस्य निष्ठां समाप्तिं नयत ततो मां द्रष्टुमर्हति। अन्यैः सुदुष्करं महत् कर्म तेन कर्त्तव्यमस्ति रावणवधरूपमतस्तत्करणेन कृतार्थं कृतदेवप्रयोजनं रावणजयिनं द्रष्टास्मि इति तीर्थव्याख्याने। संप्रत्यदर्शनहेतुस्तु पूर्वोक्त एवोपरितो बोध्यः ॥ २३ ॥

---

* "दिष्ट्या द्रक्ष्याम्यहं हरिम्" इति वा पाठः।

प्रयाते तु सहस्राक्षे राघवः सपरिच्छदः ।
अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २५ ॥
तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः ।
निषेदुस्तदनुज्ञाता लब्धवासा निमन्त्रिताः ॥ २६ ॥
ततः शक्रोपयानन्तत् पर्य्यपृच्छत राघवः ।
शरभङ्गश्च तत् सर्वं राघवाय न्यवेदयत् ॥ २७ ॥
मामेष वरदो राम ! ब्रह्मलोकं निनीषति ।
जितमुग्रेण तपसा दुष्प्रापमकृतात्मभिः ॥ २८ ॥
अहं ज्ञात्वा नरव्याघ्र ! वर्त्तमानमदूरतः ।
ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् ॥ २९ ॥

अथ बव्रीति । देवरालापोत्तरं तं तापसं शरभङ्गमामन्त्र्य मानयित्वा संपूज्य च दिवं ययौ ॥ २४ ॥

सपरिच्छदः स्त्रीभ्रातृसहितः ॥ २५ ॥

पादौ संगृह्य राम ईश्वरोऽपि ब्राह्मणा एवं पूज्या इत्यन्यान् शिक्षयितुमेवं चकार । तदनुज्ञाताः आसनावस्थानाय कृतानुमतिकाः अतएव लब्धवासाः लब्धवासस्थानाः निमन्त्रिताः भोजनाद्यर्थं तादृशा निषेदुः ॥ २६ ॥

शक्रोपयानं इन्द्रागमनप्रयोजनम् ॥ २७ ॥

निवेदनप्रकारमाह,—मामेष इति । उग्रेण तपसा मया जितं ब्रह्मलोकं एष वरद इन्द्रो ब्रह्माज्ञया मां निनीषति । यद्वा देवेन्द्रवेषधारी ब्रह्मैवायं अकृतात्मभिः अननुष्ठितभगवदुपासनैः ॥ २८ ॥

त्वयाहं पुरुषव्याघ्र! धार्मिकेण महात्मना।
समागम्य गमिष्यामि त्रिदिवञ्चावरं परम् * ॥ ३० ॥
अक्षया नरशार्दूल! जिता लोका मया शुभाः।
ब्राह्मयाश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ॥ ३१ ॥
एवमुक्तो नरव्याघ्रः सर्वशास्त्रविशारदः।
ऋषिणा शरभङ्गेन राघवो वाक्यमब्रवीत् ॥ ३२ ॥

तर्हि किमिति विलम्बितं तत्राह,—अहमिति। ज्ञात्वा योगचक्षुषा न गच्छामि योगसिद्धा स्वेच्छया देहत्यागात् त्वां प्रियातिथिम् अतिप्रियमतिथिम् ॥ २९ ॥

त्वया समागम्य त्वत्समागमस्य सकृदपि संवृत्तः एतावत्कालपर्य्यन्तानुष्ठितोपासनातोऽधिकफलद इति भावः। त्रिदिवमवरं परञ्च परो ब्रह्मलोकः ॥ ३० ॥

समागमस्य यथाधिकफलता भवति तथा करोति। अक्षया इति। के ते लोकास्तत्राह ब्राह्मया इति। उभयत्र ष्यञ् आर्षः। ब्रह्मलोका नाकपृष्ठलोकाश्च जिताः मामकास्तान् प्रतिगृह्णीष्व स्वकृतत्वेनाङ्गीकुरुष्व। अनेन सर्वकर्म्मणां भगवदर्पणमकरोदिति सूचितम्।

कामतोऽकामतो वापि यत् करोमि शुभाशुभम्।
तत् सर्वं त्वयि सन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥
नाहं कर्त्ता सर्वमेतद् ब्रह्मैव कुरुते तथा।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

---

* "देवसेवितम्" इति वा पाठः।

अहमेवाहरिष्यामि सर्वान् लोकान् महामुने ! ।
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ २३ ॥
राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै ।
शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ २४ ॥
इह राम ! महातेजाः सुतीक्ष्णो नाम धार्मिकः ।
वसत्यरण्ये नियतः स ते श्रेयो विधास्यति * ॥ २५ ॥
इमां मन्दाकिनीं राम ! प्रतिस्रोतामनुव्रज ।
नदीं पुष्पोडुपवहां ततस्तत्र गमिष्यसि ॥ २६ ॥

इति कौर्मोक्तिः । भगवदर्पितधर्माणामनन्तफलत्वं गीतादिषु स्पष्टमेव मुक्तिपर्य्यवसायित्वात् ॥ २१ ॥ २२ ॥

अहमेवेति तपसेत्यर्थः । त्वद्दत्तप्रतिग्रहेणाहमधिकारीत्यायाततोऽर्थः । वास्तवस्तु ऋषेः परमभक्तस्यानुग्रहाय तदर्पितधर्माङ्गीकारमाह भगवान् अहमेवेति । मयि न्यासत्वेन स्थापितानिमान् त्वदर्जितान् सर्वान् लोकान् तुभ्यमहमेवाहरिष्यामि प्रापयिष्यामि † इत्युक्ता इतरजनप्रतारणायाह आवासन्त्विति प्रदिष्टम् उपदिष्टम् ॥ २३ ॥ २४ ॥

इहारण्ये वसति अदूरे इति शेषः ॥ २५ ॥

---

* "सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम् ।
रमणीये वनोद्देशे स ते वासं विधास्यति ॥"
इत्यतिरिक्तं पाश्चात्त्याः पठन्ति ।

† चत्रियस्य प्रतिग्रहानर्हत्वात् अहमेव स्वतपसा सर्व्वान् लोकान् आहरिष्यामीत्यर्थस्तु समीचीनः ।

एष पन्था नरव्याघ्र ! मुहूर्त्तं पश्य तात ! माम् ।
यावज्जहामि गात्राणि जीर्णान्त्वचमिवोरगः ॥ ३७ ॥
ततोऽग्निं स समाधाय हुत्वा चाज्येन मन्त्रवत् ।
शरभङ्गो महातेजाः प्रविवेश हुताशनम् ॥ ३८ ॥
तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः ।
जीर्णान्त्वचं तदास्थीनि यच्च मांसञ्च शोणितम् ॥ ३९ ॥
स च पावकसंकाशः कुमारः समपद्यत ।
उत्थायाग्निचयात्तस्माच्छरभङ्गो व्यरोचत ॥ ४० ॥

प्रतिस्रोताम् आबन्तत्वमार्षम् । मन्दाकिनीं तामिव पुण्यां तन्नामिकां वा चित्रकूटस्थेयमेव । प्रतिस्रोतसं कृत्वा व्रज पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पवत्सु उडुपवहाम् उडुपं प्लवः पुष्पसमूहवहामिति वा ॥ ३६ ॥

एष पन्था इति मार्गोपदेशः अथ ऋषिर्भगवत्प्रार्थितस्योत्तरं दत्त्वा स्वाभीष्टं भगवन्तं प्रार्थयते मुहूर्त्तं पश्य तात माम् अयं कृतार्थो भवत्वित्यभिध्यानपूर्वकं कटाक्षेणेति शेषः । तातेति गूढं जगज्जनकेत्यर्थमपि गात्राणि गात्रावयवान् ॥ ३७ ॥

ततोऽग्निं स इति । वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिरित्युक्तेऽग्निप्रवेशेऽन्त्येष्टिमार्गेणाग्निं समाधाय मन्त्रवत् तदुक्तमन्त्रैर्हुत्वा च अग्निप्रवेशोक्तमन्त्रैरुपनिषदुक्तैः प्रविवेश ॥ ३८ ॥

तस्येति । तस्य शरभङ्गस्य रोमादीनि वह्निर्ददाहेति शेषः ॥ ३९ ॥

स लोकानाहिताग्नीनाम् ऋषीणाञ्च महात्मनाम् ।
देवानाञ्च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४१ ॥

स पुण्यकर्मा भुवने द्विजर्षभः
पितामहं सानुचरं ददर्श ह ।
पितामहश्चापि समीक्ष्य तं द्विजं
ननन्द सुस्वागतमित्युवाच ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
शरभङ्गस्य अग्निप्रवेशो नाम पञ्चमः सर्गः ॥ ५ ॥

स्वर्गारोहणार्थं दिव्यशरीरपरिग्रहमग्निप्रवेशस्य पूर्वकृतोपासनस्य च फलभूतमाह । सचेति ॥ ४० ॥

आहिताग्निलोकाः । कर्मणा पितृलोक इति श्रुताः चन्द्रप्रदक्षिणाः । ऋषिलोकाः विद्यया देवलोक इति श्रुताः सूर्यप्रदक्षिणाः । देवाना-माजानदेवानां ब्रह्मविष्णुरुद्राणाञ्च लोकाः । यान् ध्रुवः प्रदक्षिणं करोति । ततो ब्रह्मलोकं तूर्णं व्यरोहतारूढवान् ॥ ४१ ॥

पितामहं ब्रह्मादित्रयसमष्टिरूपम् ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे पञ्चमः सर्गः ॥ ५ ॥

# षष्ठः सर्गः।

शरभङ्गे दिवं प्राप्ते मुनिसंघाः समागताः।
अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम्॥ १॥
वैखानसा वालखिल्याः संप्रक्षाला मरीचिपाः।
अश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः॥ २॥
दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे।
गात्रशय्या अशय्याश्च तथैवानवकाशिकाः *॥ ३॥

मुनिसंघाः दण्डकारण्यवासिनः समागता मिलिताः अभ्यगच्छन्त स्वरक्षणप्रार्थनार्थमिति शेषः॥ १॥

वैखानसा इति। ये नखाः ते वैखानसाः ये वालाः ते वालखिल्या इति श्रुतेः। प्रजापतेर्नखलोमजाः। संप्रक्षालाः भगवतः पादप्रक्षालनजा महर्षयः। अम्बुस्तनिकाः संप्रक्षाला इत्यन्ये। मरीचिपाः रविचन्द्रान्यतरकिरणजीवनाः। अश्मकुट्टाः अपक्वकुट्टितान्नभक्षकाः॥ २॥

दन्तोलूखलिनः दन्तातिरिक्तावहननसाधनरहिताः। उन्मज्जकाः कण्ठदघ्ने जले स्थित्वा तपः कुर्वन्तः। गात्रशय्या अनास्तरणशायिनः। अशय्या निद्राहीनाः अनवकाशिकाः एकपादस्य स्थित्यवकाशदानरहिताः। एकपादस्थितिमन्त इति यावत्॥ ३॥

---

* "तथैवाभ्रावकाशिकाः" इति वा पाठः।

मुनयः सलिलाहारा वायुभक्षास्तथापरे ।
आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४ ॥
तथोर्द्धवासिनो*दान्तास्तथार्द्रपटवाससः ।
सजपाश्च तपोनिष्ठास्तथा पञ्चतपोन्विताः ॥ ५ ॥
सर्वे ब्राह्म्या श्रिया युक्ता दृढयोगसमाहिताः ।
शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः ॥ ६ ॥
अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् ।
ऊचुः परमधर्मज्ञमृषिसंघाः समागताः ॥ ७ ॥
त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथः ।
प्रधानश्चासि नाथश्च देवानां मघवानिव ॥ ८ ॥

आकाशनिलयाः अनावृतप्रदेशस्थायिनः । स्थण्डिलशायिनः उपलिप्तानास्तीर्णस्थलशयनाः ॥ ४ ॥

ऊर्द्धवासिनः गिरिशिखराद्यूर्द्धप्रदेशे नित्यं वासशालिनः । व्रतोपवासिन इति पाठस्तु चिन्त्यः । तस्य धारणाधर्मत्वादिति कतकः । आर्द्रपटवाससः नित्यमार्द्रवस्त्रवसनशीलाः. सजपाः सदा जपपराः तपोनिष्ठाः सदा स्वाध्यायाध्ययनशीलाः तपो हि स्वाध्याय इत्युक्तेः । पञ्चतपोन्विताः ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥ ५ ॥

ब्राह्म्या श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढयोगसमाहिताः योगैकाग्रचित्ताः ॥ ६ ॥ ७ ॥

किमूचुस्तत्राह,—त्वमिति । इक्ष्वाकुकुलस्य पृथिव्याश्च येन सकल-

* "मासोपवासिनः" इति वा पाठः ।

विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च।
पितृव्रतत्वं सत्यञ्च त्वयि धर्मश्च पुष्कलः॥ ९॥
त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम्।
अर्थित्वान्नाथ! वक्ष्यामस्तच्च नः क्षन्तुमर्हसि॥ १०॥
अधर्मः सुमहान्नाथ! भवेत्तस्य तु भूपतेः।
यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत्॥ ११॥

त्रैलोक्यस्येति गूढम्। प्रधानत्वेन जगद्धारणकर्तृत्वं नाथत्वेन पालकत्वं गर्भितम्। देवानां मघवानिव॥ ८॥

यशसा विक्रमेण च श्रुतः प्रसिद्धः तेन रूपेणेति शेषः। पितृवचनपालनं व्रतं यस्य तद्भावः। सत्यं सत्यवचनञ्च त्वयि तिष्ठति इति शेषः। किञ्च त्वयि स्मृते धर्मश्च पुष्कलः अङ्गहीनोऽपि सकलाङ्गपूर्णो भवतीत्यर्थः

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च।
तद्विष्णोः स्मरणादेव सम्पूर्णं स्यादिति श्रुतिः॥

इति स्मृतेः॥ ९॥

धर्मज्ञं शरणागतरक्षणरूपधर्मज्ञं धर्मवत्सलं धर्मानुष्ठातृप्रियं त्वामासाद्य शरणं प्राप्य। अर्थित्वादर्थिभावेन यत्क्रूरमपि वक्ष्यामस्तत् क्षन्तुमर्हसीति योजना। यद्यपि सतसु कार्य्यवतां पुंसामलमेवाग्रतस्थितिरिति न्यायेन त्वदग्रेऽवस्थानमेव सकलमनोरथपूरकत्वान्नः कार्य्यसाधनं तथाप्यार्त्तिशयेन किञ्चिद्वक्ष्यमाणं क्षन्तव्यमिति भावः॥ १०॥

जगद्रक्षणतत्परस्य विनापि कथनं स्वरक्षणेऽपि प्रवृत्तिरस्त्येव

युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव * ।
नित्ययुक्तः सदा रक्षन् सर्वान् विषयवासिनः ॥ १२ ॥
प्राप्नोति शाश्वतीं राम ! कीर्त्तिं स बहुवार्षिकीम् ।
ब्रह्मणस्थानमासाद्य तत्र चापि महीयते ॥ १३ ॥
यत् करोति परं धर्मं मुनिर्मूलफलाशनः ।
तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४ ॥

तथाप्यार्त्यतिशयेन लोकरीत्या राजधर्मं बोधयन्ति। अधर्म इति। न च रक्षति विषयवासिन इत्यपकृष्यते। बलिषड्भागं करभागरूपं षष्ठांशम्। यद्वा बलये पूजाय दत्तषड्भागं षष्ठांशं प्रजाभिः स्वानिष्ट-परिहारायेत्यर्थः ॥ ११ ॥

अथ रक्षणेऽभ्युदयमाह। युञ्जानः प्रजारक्षणे यतमानः। सर्वान् देशवासिनः स्वान् प्राणानिव प्राणेभ्योऽप्यधिकप्रियान् सुतानिव नित्ययुक्तः सदा सावधानः रक्षन्। इह शाश्वतीम् अस्यैव विवरणं बहुवार्षिकीं कीर्त्तिमैहिकीमामुष्मिकञ्च ब्रह्मलोकरूपं फलं प्राप्नोति ॥ १२ ॥ १३ ॥

ननु षष्ठांशग्रहणात् प्रजारक्षणावश्यकत्वेऽपि वनवासिरक्षणं कुत-स्तत्राह,—यदिति। यदिति सामान्ये नपुंसकम्। प्रजाः वानप्रस्थप्रजाः चतुर्भागश्चतुर्थांश इदमुपलक्षणं षड्भागस्यापि, तत्रापवासिभिक्षाहारि-

* "प्राणिनः स्वान् सुतानिव" इति वा पाठः

सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान्।
त्वन्नाथोऽनाथवद्राम! राक्षसैर्हन्यते भृशम्॥ १५॥
एहि पश्य शरीराणि मुनीनां भावितात्मनाम्।
हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने॥ १६॥
पम्पानदीनिवासानामनुमन्दाकिनीमपि।
चित्रकूटालयानाञ्च क्रियते कदनं महत्॥ १७॥

धर्मात् षड्भागप्राप्तिः। तेन धर्मषड्भागप्रतिपादकस्मृत्यविरोधः राजपरिपालितदेशभवफलाद्यशनवतो धर्माच्चतुर्थो भागः। तदन्नभोजनादिपुष्टाङ्गधर्मात्त्वर्धं राज्ञः। अन्नप्रदातुस्तस्यार्धं कर्तुस्त्वार्धं न संशय इति स्मृतेरिति बोध्यम्॥ १४॥

अथ विवक्षितमर्थमाह,—सोऽयमिति। ब्राह्मणभूयिष्ठ इत्यनेन क्षत्त्रवैश्यवानप्रस्थसत्तापि तत्र बोधिता। त्वं नाथो रक्षको यस्य स त्वन्नाथः सोऽप्यनाथवद्बध्यतेऽतः त्वादृशस्योपेक्षानुचितेति भावः॥ १६॥

स्ववचसो मिथ्यात्वपरिहारायाह,—एहीति। मुनयो मननशीलाः भावितात्मानो निदिध्यासननिष्ठाः शरीराणि केवलं हत्वा त्यक्तानि बहुधा बहुप्रकारैरङ्गप्रत्यङ्गच्छेदनादिभिः॥ १६॥

सकलदण्डकारण्यपीडामाह,—पम्पेत्यादि। पम्पा च नद्यश्च तत्र निवासो येषां तेषां पम्पाख्या नदी वा अनु मन्दाकिनीमपीति अनुर्लक्षणे कर्मप्रवचनीयः। मन्दाकिन्या अन्यत्रपुण्यनद्यास्तीरवासिनां मन्दाकिन्या विस्तीर्णप्रवाहत्वात् दुरवगाहतया पृथगुक्तिः राघवाख्यानं॥ १७॥

एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् ।
क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ॥ १८ ॥
ततस्त्वां शरणार्थञ्च शरणं समुपस्थिताः ।
परिपालय नो राम ! वध्यमानान्निशाचरैः ॥ १९ ॥
परा त्वत्तो गतिर्वीर ! पृथिव्यां नोपपद्यते ।
परिपालय नः सर्वान् राक्षसेभ्यो नृपात्मज ! ॥ २० ॥
एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम् ।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥ २१ ॥
नैवमर्हथ मां वक्तुमाज्ञाप्योऽहं तपस्विनाम् ।
केवलेनं स्वकार्य्येण प्रवेष्टव्यं वनं मया ॥ २२ ॥

विप्रकारं दुःखं न मृष्यामः सोढुमशक्ताः ॥ १८ ॥
शरणं रक्षणसमर्थं रक्षणार्थम् ॥ १९ ॥
त्वत्तः परा गतिस्त्वदन्यस्त्राता ॥ २० ॥
तपस्विनां तपोबलयुतानां तापसानाम् ऋषीणाम् ॥ २१ ॥

तदेवाह,—नैवमिति । एवम् उक्तप्रार्थनारूपं वचः आज्ञाप्यः शिष्यादिरिवेदं कुर्विति शिक्षणीयः । केवलेनोपाध्यन्तररहितेन स्वकार्य्येण पितृवचनपरिपालनात्मकेन हेतुना मयावश्यं वनं प्रवेष्टव्यमेव । स च मे वनप्रवेशो राक्षसैः क्रियमाणं भवतामिमं विप्रकारम् अपाक्रष्टुमपि भविष्यति इत्यर्थं इति तीर्थकतकौ । भवच्छत्रुहननम् केवलं मदीयमेव कार्य्यं वक्रधर्मोपचयजनकत्वान्मदिष्टसाधनमेव । यद्यपि स्वविप्र-

विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम्।
पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम्॥ २३॥
भवतामर्थसिद्ध्यर्थमागतोऽहं यदृच्छया।
तस्य मेऽयं वने वासो भविष्यति महाफलः॥ २४॥
तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान्।
पश्यन्तु वीर्य्यमृषयः सभ्रातुर्मे तपोधनाः॥ २५॥
दत्त्वा वरञ्चापि तपोधनानां
धर्मे धृतात्मा सह लक्ष्मणेन।

कारनाशे भवन्तः समर्था एव तथापि मम धर्मोपचयायैवैषा भवदीया मम प्रेरणेति भावः। अन्वयस्त्वत्र स्फुटएवेत्यन्ये। किञ्च पित्राज्ञापरिपालनार्थमिदं वनं प्रविष्ट एवास्मि। प्रविष्टे च मयि सोऽर्थोऽवश्यम्भाव्य एवेति भवतामेवं प्रार्थनमनवसरमिति भावः॥ २२॥ २३॥

तदेवाह,—भवतामिति। यदृच्छया आगत एवाहं भवतामर्थसिद्ध्यर्थमपि भविष्याम्येवेति शेषः। पितुस्त्वित्यनेन उक्तएवार्थः कविना श्लोकान्तरेण वर्ण्यते इयमपि शैली कवेरिति कतकतीर्थौ। यतः शत्रून् हन्तुमिच्छामि अतस्तस्य यदृच्छया वनमागतस्य मेऽयं वनवासो महाफलो भविष्यतीति स्वगतो विचारः। अथ ऋषिधैर्य्याय प्रकाशं प्रतिज्ञामीतै पश्यन्त्विति। सर्वथा हनिष्यामीति यावत्॥ २४॥ २५॥

तपोधनैस्सापि सहार्य्यवृत्तः
सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
सुतीक्ष्णाभिगमनं नाम षष्ठः सर्गः ॥ ६ ॥

वरम् उक्तवचनात्मना धर्मे धृतात्मा धर्मे स्थिरचित्तः आर्य्यं पूज्यं वृत्तं यस्य सः । तपोधनैः सह सुतीक्ष्णमभिजगाम ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

रामस्तु सहितो भ्रात्रा सीतया च परन्तपः ।
सुतीक्ष्णस्याश्रमपदं जगाम सह तैर्द्विजैः ॥ १ ॥
स गत्वा दूरमध्वानं नदीस्तीर्त्वा बहूदकाः ।
ददर्श विमलं शैलं महामेरुमिवोन्नतम् ॥ २ ॥
ततस्तदिक्ष्वाकुवरौ सततं विविधैर्द्रुमैः ।
काननं तौ विविशतुः सीतया सह राघवौ ॥ ३ ॥
प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम् ।
ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम् ॥ ४ ॥
तत्र तापसमासीनं मलपङ्कजधारिणम् ।
रामः सुतीक्ष्णं विधिवत् तपोधनमभाषत ॥ ५ ॥

द्विजैः प्रार्थनार्थमागतैर्वानप्रस्थैः ॥ १ ॥

विमलं पवित्रम् । महामेघमिवेति पाठे स्थितमिति शेषः । नैल्य-स्थौल्याभ्यां सादृश्यम् । उन्नतमिति स्वरूपकथनम् ॥ २ ॥ ३ ॥ ४ ॥

अत्र ततस्तदिक्ष्वाकुवरावित्यादिश्लोकत्रयम् प्रक्षिप्तमिति कतकः । मलपङ्कजधारिणं मलस्य सर्वाघस्य शान्तये पङ्कजे पद्मासने स्थित्वा धारणाशीलम् । यद्वा पङ्कजे हृदयपङ्कजे धारिणमैश्वरयोगधारणाशील-

रामोऽहमस्मि भगवन्! भवन्तं द्रष्टुमागतः।
तन्माभिवद धर्मज्ञ! महर्षे! सत्यविक्रम!॥ ६॥
स निरीक्ष्य ततो धीरो रामं धर्मभृतां वरः।
समाश्लिष्य च बाहुभ्यामिदं वचनमब्रवीत्॥ ७॥
स्वागतं ते रघुश्रेष्ठ! राम! सत्यभृतां वर!।
आश्रमोऽयं त्वयाक्रान्तः सनाथ इव साम्प्रतम्॥ ८॥
प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः!।

मित्यर्थ इति कतकः। तीर्थस्तु मलपङ्कजटाधरमिति पठित्वा मलम् उद्वर्त्तनादिसंस्काराभावाच्छरीरजं पङ्को वनसञ्चाराच्छरीरलग्न इति भेद इत्याह। विधिवदुपगम्येति शेषः॥ ५॥

तन्माभिवदेति मा इति माम् उक्तयोगधारणाशीलत्वेन वाग्व्यवहाराभावादेवं प्रार्थना सत्यविक्रम अच्युततपःस्वभाव॥ ६॥

स निरीक्ष्येति। उक्तवचनात् समाधितो व्युत्थाय रामं दृष्ट्वेत्यर्थः॥ ७॥

सनाथ इव सस्वामिक इव अत्रायमाश्रमो ब्रह्मचर्याद्याश्रमव्यवहार्योऽयं देहस्त्वया जीवरूपेणाक्रान्तोऽपि साम्प्रतमद्य मायया सच्चिदानन्दस्यैवैवं शरीररूपेण प्रतिभासमानस्य बहिश्चक्षुषानुभवन् सनाथ इव ईदृशस्य तद्रूपस्य दर्शनेन चित्तशुद्ध्यापूर्वं जीवाभेदेनाहमिति प्रतीत्या गृहीतस्य तद्वैलक्षण्येनेदानीं ग्रहात् भेदनिबन्धनसनाथत्वव्यवहारः। इवेन जडानामपि अतिरिक्तत्वाभावः सूचित इति ध्वनिः॥ ८॥

देवलोकमितो वीर! देहं त्यक्त्वा महीतले ॥ ९ ॥
चित्रकूटमुपादाय राज्यभ्रष्टोऽसि मे श्रुतः।
इहोपयातः काकुत्स्थ! देवराजः शतक्रतुः ॥ १० ॥
उपागम्य च मे देवो महादेवः सुरेश्वरः।
सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा ॥ ११ ॥
तेषु देवर्षिजुष्टेषु जितेषु तपसा मया।
मत् प्रसादात् सभार्य्यस्त्वं विहरस्व सलक्ष्मणः ॥ १२ ॥

अतस्त्वां प्रतीक्षमाण इति। त्वां स्वात्मभूतं महायशा इति सम्बोधनं देवलोकं देवस्य ब्रह्मणो लोकम्॥ ९ ॥

ननु कात्र मदागमनसम्भावना तत्राह,—चित्रेति। यदा राज्यभ्रष्टश्चित्रकूटमुपादाय प्राप्य स्थितोऽसि तदाप्रभृति मे मया श्रुतोऽसि। आश्रमोऽयमित्यस्य व्यंग्यार्थे तु चित्रं विचित्रफलहेतुकूटं दुरवगाहत्वात् संसारं प्राप्य राज्यभ्रष्टो विद्यासंसर्गेण स्वाराज्यान्नित्यशुद्धबुद्धमुक्तस्वरूपात् भ्रष्टस्तद्योगात् संसारं प्राप्तस्त्वमेव मया श्रुतिवाक्येभ्यः श्रुतोऽसि। अतस्तत् प्रतीक्षया न देवलोकं गत इति व्यंग्योऽर्थः। नन्विदानीं क्व ते देवलोकारोहप्रसक्तिस्तत्राह,—इहेति। शरभङ्गाङ्गानान्तरमिहाप्यागत इत्यर्थः॥ १० ॥

पुण्येन कर्मणा जितानित्यनेन श्रवणसम्पत्तावपि निदिध्यासनसम्पत्त्यभावोस्योक्तः। पूजावचनेषु पौनरुक्त्यं न दोषाय। देवादिपदानां प्रवृत्तिनिमित्तभेदस्य स्पष्टत्वान्न पौनरुक्त्यमिति केचित्॥ ११ ॥

तमुग्रतपसं दीप्तं महर्षिं सत्यवादिनम् ।
प्रत्युवाचात्मवान् रामो ब्रह्माणमिव वासवः ॥ १३ ॥
अहमेवाहरिष्यामि स्वयं लोकान् महामुने ! ।
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४ ॥
भवान् सर्वत्र कुशलः सर्वभूतहिते रतः ।
आख्यातः शरभङ्गेन गौतमेन महात्मना ॥ १५ ॥
एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः ।
अब्रवीन्मधुरं वाक्यं हर्षेण महता युतः ॥ १६ ॥
अयमेवाश्रमो राम ! गुणवान् रम्यतामिह ।
ऋषिसंघानुचरितः सदा मूलफलैर्युतः ॥ १७ ॥
इममाश्रममागम्य मृगसंघा महीयसः * ।

अथ सर्वं पुण्यमनन्तफलत्वाय भगवत्यर्पयति तेष्विति ॥ १२ ॥ १३ ॥

अहमेवेति । तपसेत्यर्थः । त्वत्तः प्रतिग्रहे नाहमधिकारीति आपाततोऽर्थः । वास्तवस्तु तद्दत्तपुण्याङ्गीकारेणानुगृह्णाति भगवान् अहमेवेति । न्यासत्वेन त्वया स्थापितं तुभ्यं प्रापयिष्यामि । अहमेवेत्यनेन सर्वकर्मफलदाता सर्वोपासनास्वहमेवेति सूचितम् । अथ लोकदृष्ट्योत्तरजनप्रतारणाय आवासमिति । प्रदिष्टं त्वयेति शेषः ॥ १४ ॥

गौतमेन गौतमगोत्रेण शरभङ्गेन सर्वत्र इह परत्र च कुशल इत्याख्यातम् । एवञ्चानभिज्ञोऽहमित्युत्तरं दातुमशक्यमित्याशयः ॥ १५ ॥ १६ ॥

अयमेव अस्मदीयः ॥ १७ ॥

---

* "महायशः !" इति वा पाठः ।

अटित्वा * प्रतिगच्छन्ति लोभयित्वाकुतोभयाः ॥ १८ ॥
नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै ।
तच्छ्रुत्वा वचनं तस्य महर्षेर्लक्ष्मणाग्रजः ॥ १९ ॥
उवाच वचनं धीरो विगृह्य † सशरं धनुः ।
तानहं सुमहाभाग ! मृगसंघान् समागतान् ॥ २० ॥
हन्यां निशितधारेण शरेणानतपर्वणा ‡ ।
भवांस्तत्राभिषज्येत किं स्यात् कृच्छ्रतरं ततः ॥ २१ ॥

अनेन गुणमुक्त्वा दोषमाह,—इममिति । इममाश्रमं दण्डकारण्या-श्रमं महीयसः अतिशयितमहत्त्ववतोऽपि अहत्वा हननमकृत्वा लोभ-यित्वा रूपकान्तिगतिविशेषैः चित्तक्षोभं कृत्वा गच्छन्तीत्यर्थः । अनेन भावी मारीचवृत्तान्तः सूचितः । अकुतोभयाः ते ॥ १८ ॥

अत्र दण्डकारण्ये। नान्यो दोषो भवेदत्रेत्यस्यैव विवरणम् मृगेभ्यो ऽन्यत्र विद्धि वै इति । मृगेभ्योऽन्यत्र न भयमिति विद्धीत्यर्थः । दण्डका-रण्याभिप्रायेण मुन्युक्तं तदाश्रममात्राभिप्रायं परिकल्प्य रामोऽवादोदि-त्याह । तच्छ्रुत्वा मृगेभ्यो भयविषयं वचनम् ॥ १९ ॥ २० ॥

हन्यां प्राप्तकाले लिङ् । प्राप्तमृगहननं कुर्य्यां परं त्वेवं कृत्वाऽत्र स्थातु-मशक्यमित्याह,—भवानिति । तत्र मृगसंघवधे भवान् मयाभिषज्येत ।

---

* "अहत्वा" इति वा पाठः ।

† "विकृष्य" इति वा पाठः ।

‡ "शरेणाग्निवर्चसा" इति वा पाठः ।

एतस्मिन्नाश्रमे वासं चिरन्तु न समर्थये ।
तमेवमुक्त्वो परमं रामः सन्ध्यामुपागमत् ॥ २२ ॥
अन्वास्य पश्चिमां सन्ध्यां तत्र वासमकल्पयत् ।
सुतीक्ष्णस्याश्रमे रम्ये सीतया लक्ष्मणेन च ॥ २३ ॥
ततः शुभं तापसयोग्यमन्नं
स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् ।
ताभ्यां सुसत्कृत्य ददौ महात्मा
सन्ध्यानिवृत्तौ रजनीं समीक्ष्य ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
सुतीक्ष्णाभिगमनं नाम सप्तमः सर्गः ॥ ७ ॥

अभिषङ्गः पराभवः । कृतपराभवो यो भवेत्ततः परं मे कष्टतरं किं स्यात् न किमपि [अभिषज्येत विषादं प्राप्नुयादिति केचित् ॥ २१ ॥

यदेवमत एतस्मिन्निति । चिरं चिरकालं वासं न समर्थये नेच्छामि । मृगसंघवधं विना स्थातुमशक्यं तद्वधेन च भवतां पीड़ेत्याशयः । उपरमं उपरम्य । क्वचिदुपरम्येत्येव पाठः । सन्ध्यामुपागमत् सन्ध्यां वन्दितुमुपागतवान् ॥ २२ ॥ २३ ॥

सन्ध्यानिवृत्तौ रजनीमभ्यवहारार्हां समीक्ष्येति यावत् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः।

रामस्तु सह सौमित्रिः सुतीक्ष्णेनाभिपूजितः।
परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत ॥ १ ॥
उत्थाय च यथाकालं राघवः सह सीतया।
उपस्पृश्य सुशीतेन तोयेनोत्पलगन्धिना ॥ २ ॥
अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ।
काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३ ॥
उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः।
सुतीक्ष्णमभिगम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४ ॥
सुखोषिताः स्म भगवंस्त्वया पूज्येन पूजिताः।
आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५ ॥
त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम्।
ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६ ॥

परिणाम्य अतिनाह्य ॥ १ ॥
उपस्पृश्य स्नात्वा उत्पलगन्धिना उत्पलगन्धवता ॥ २ ॥
काल्यं यथाकालप्राप्तमित्यभ्यर्चनक्रियाविशेषणम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

अभ्यनुज्ञातुमिच्छामः सहैभिर्मुनिपुङ्गवैः ।
धर्मनित्यैस्तपोदान्तैर्विशिखैरिव पावकैः ॥ ७ ॥
अविषह्यातपो यावत् सूर्यो नातिविराजते ।
अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८ ॥
तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः ।
ववन्दे सहसौमित्रिः सीतया सह राघवः ॥ ९ ॥
तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः ।
गाढमाश्लिष्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥
अरिष्टं गच्छ पन्थानं राम ! सौमित्रिणा सह ।
सीतया चानया सार्द्धं छाययेवानुवृत्तया ॥ ११ ॥
पश्याश्रमपदं रम्यं दण्डकारण्यवासिनाम् ।
एषां तपस्विनां वीर ! तपसा भावितात्मनाम् ॥ १२ ॥

अभ्यनुज्ञातुमिच्छामः त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामः विशिखैर्विधूमैः ॥ ७ ॥

अविषह्यातपः सोढुमशक्यातपो यावन्नातिविराजते तावत् गन्तुमिच्छाम इत्यन्वयः । अमार्गेणान्यायेनागतां लक्ष्मीमैश्वर्यं प्राप्यान्वयवर्जितः अन्वयः सम्बन्धस्तद्विवर्जितः । गुरुसाधुजनसेवारहितो दुष्प्रभुरिव अकुलज इव वा यावदविसह्यप्रतापो न ततः पूर्वं गन्तुमिच्छाम इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

अरिष्टं निरुपद्रवम् ॥ ११ ॥

सुप्राज्यफलमूलानि पुष्पितानि वनानि च ।
प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३ ॥
फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४ ॥
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयाण्यरन्यानि मयूराभिरुतानि च ॥ १५ ॥
गम्यतां वत्स ! सौमित्रे ! भवानपि च गच्छतु ।
आगन्तव्यञ्च ते दृष्ट्वा पुनरेवाश्रमं मम ॥ १६ ॥
एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः ।
प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥
ततः शुभतरे तूणी धनुषी चायतेक्षणा ।
ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः * ॥१८॥

आश्रमपदमिति जातावेकवचनम् ॥ १२ ॥

उक्तविशेषणविशिष्टानि वनानि सरांसि च द्रक्ष्यसे इत्यन्वयः । शान्तपक्षिगणत्वं परस्परविरोधाभावात् ॥ १३ ॥

कारण्डवैर्विकीर्णानि व्याप्तानि ॥ १४ ॥ १५ ॥

ते त्वया सकलऋषीणामाश्रमान् दृष्ट्वा पुनरपि ममाश्रमं प्रत्यागन्तव्यमित्यर्थः ॥ १६ ॥ १७ ॥

ततो धनुरादिदानानन्तरं विमलौ निर्मलौ खड्गौ च ददौ ॥१८॥

* "खड्गौ च कनकत्सरू" इति वा पाठः

आबध्य च शुभे तूणी चापे चादाय सुखने ।
निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९ ॥
शीघ्रं तौ रूपसम्पन्नावनुज्ञातौ महर्षिणा ।
प्रस्थितौ धृतचापासी सीतया सह राघवौ ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
रामादीनां दण्डकारण्यगमनं नाम
अष्टमः सर्गः ॥ ८ ॥

चापे चापशब्दो द्विलिङ्गः ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ।



सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
हृद्यया स्निग्धया वाचा भर्त्तारमिदमब्रवीत् ॥ १ ॥
अधर्मन्तु * सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन च शक्योऽयं व्यसनात् कामजादिह ॥ २ ॥
त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।

राक्षसवधप्रतिज्ञां पुनरुक्तां कारयितुं तेजोरक्षार्थञ्च राक्षसवधमापाततो निषेधती सीता अब्रवीत् । सीतेति शेषः । हृद्यया युक्तिमत्त्वेन हृदयङ्गमया स्निग्धया स्नेहप्रवृत्तया ॥ १ ॥

अधर्ममिति । यद्यपि भवान् महान् महापुरुषोऽथापि सुसूक्ष्मेण विधिना सूक्ष्मेण मार्गेण विचारेण सति भवान् अधर्मं तु प्राप्यते प्राप्नोति छान्दसः श्यन् । अतिदुर्बलमृगवधप्रतिज्ञया वनप्रवेशे सतीत्यर्थः । वर्त्तमानसामीप्ये लट् । अयमधर्मस्तु कामजाद् व्यासनाद्विनिवृत्तेन त्वया पिवर्त्तयितुं शक्यः ॥ २ ॥

किं तत् कामजं व्यसनम् कश्चायमधर्मोयस्तन्निवृत्त्या निवर्त्तनीयइत्याशङ्कायामाह—त्रीण्येवेति । कानि त्रीणीत्यतो मिथ्येति स्वदेहस्त्री-

* "यस्तु धर्मः" इति वा पाठः

जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥
प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ७ ॥
सेवमाने दृढं सूर्य्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्य्यश्च साम्प्रतम् ।

हेमन्तधर्मानाह, नीहारेण परुषः कठिनस्पर्शशरीरः । वस्त्रादिस्पर्शसहशरीर इति कश्चित् । जलानुपभोगः शैत्यातिशयात् सुभग इष्टः ॥ ५ ॥

काले आग्रयणानुष्ठानकाले नवाग्रयणपूजाभिः नवान्नप्राशनाय यदाग्रयणाख्यं कर्म तद्रूपपूजाभिः पितॄन् देवांश्च सन्तर्प्य कृताग्रयणकाः सन्तो विगतकल्मषा अभवन् ॥ ६ ॥

प्राज्यं भूरि यथा भवति तथा सम्पन्नोऽन्नप्राप्तिविषयः कामो येषां ते प्राज्यकामाः सम्पन्नतरगोरसाः बहुलतरक्षीरादयो जनपदा भवन्तीति शेषः । तथाभूतेषु जनपदेषु यात्रार्थं दर्शनार्थम् ॥ ७ ॥

अन्तकसेवितां दिशं दक्षिणाम् ॥ ८ ॥

प्रकृत्या स्वभावेन हिमकोशैर्घनीभूतहिमसमूहैराढ्यो हिमवानिति साम्प्रतम् । यतो दूरसूर्य्योऽतः सुव्यक्तं प्रकटं हिमवान् सन् हिमवानिति यथार्थनामा भवति ॥ ९ ॥

यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥
अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥
मृदुसूर्य्याः सनीहाराः पटुशीताः समाहताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरा यामास्त्रियामा यान्ति साम्प्रतम् ॥ १२ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥

मध्याह्ने सुखः सञ्चारो येषु ते । तथा मध्याह्ने स्पर्शत आतपस्पर्शतः सुखजनकाः अतएव सुभगादित्याः सुसेव्यादित्या छायाः सलिलानि च दुर्भगानि असेव्यानि येषु ॥ १० ॥

नीहारः सूर्य्यावरकं हिमं मृदुसूर्य्या ईषदुष्णसूर्य्याः पटुशीताः प्रबलशीताः शून्यारण्याः हिमनाशितपर्णत्वात् । हिमध्वस्ताः हिमध्वस्तपङ्कजाः ॥ ११ ॥

निवृत्ताकाशशयनाः निवृत्तानावृतप्रदेशशयनाः पुष्यनक्षत्रबोधितरात्रिकालपरिमाणाः, हिमारुणाः हिमधूसराः कपोतवर्णाद्यरुणशब्दः । शीतं वृद्धतरं यासु ताः । आयामा दैर्घ्यवत्यस्त्रियामा रात्रयः ॥ १२ ॥

रवौ संक्रान्तं सौभाग्यं सुभगत्वम् उपभोग्यत्वरूपं यस्य सः । तुषारधूसरमण्डलः निश्वासान्धो निश्वासमलिनआदर्श इव न प्रकाशते ॥ १३ ॥

ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ १४ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्य्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥ १७ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमप्युदितः सूर्य्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥

आतपश्यामा आतपेन वैवर्ण्यं प्राप्ता सीतेव लक्ष्यते सत्तामात्रेण नतु शोभत इत्यर्थः ॥ १४ ॥

प्रकृत्या शीतलस्पर्शः । पश्चिमदिग् वायुः साम्प्रतं हिमविद्धत्वात् काले प्रातःकाले द्विगुणशीतलः ॥ १५ ॥

बाष्पउष्मा तेन छन्नानि अरण्यानि प्रातःकाले कूपोदकादिष्विव वनादप्युष्मा प्रादुर्भवति इत्यनुभवप्रमाणकमिति तीर्थः । यवगोधूमाद्यङ्कुरेष्ववश्यायबिन्दुदर्शनाद् वृक्षेषु च तद्दर्शनाद् बाष्पच्छन्नानि बाष्पो नेत्रजलेऽपीत्यन्ये ॥ १६ ॥

खर्जूरपुष्पाकृतित्वं प्रलम्बत्वेन पीतत्वेन च किञ्चिदालम्बाः किञ्चिन्नम्राः कनकप्रभाः परिणतत्वात् ॥ १७ ॥

अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संरक्तः किञ्चिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥
अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥
संस्पृशन् विमलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥
अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति साम्प्रतम् ॥ २४ ॥

नीहारो हिमातिशयरूपः वृक्षपर्वताद्यदर्शनसम्पादनक्षमः । तत्-संवृतैरुपसर्पद्भिर्मयूखैरुपलक्षितः । शशाङ्कसदृश इत्यर्थः ॥ १८ ॥

अग्राह्यवीर्यः ईषद्ग्राह्योष्मा । स्पर्शतः सुखः सुखस्पर्शः ॥ १९ ॥

अवश्यायो हिमबिन्दुः ॥ २० ॥

प्रतिसंहरते करं दुस्पर्शशैत्यवशादिति भावः ॥ २१ ॥

समुपासीनाः जलसमीपदेशमिति शेषः । नावगाहन्ति नावगाहन्ते ॥ २२ ॥

अवश्यायतमोभ्यां नद्धा रात्रौ नीहारतमसावृताः प्रत्यूषे ॥ २३ ॥

तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि * प्रायेण रसवज्जलम् ॥ २५ ॥
जराजर्ज्जरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २६ ॥
अस्मिंस्तु पुरुषव्याघ्र ! काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २७ ॥
त्यक्त्वा राज्यञ्च मानञ्च भोगांश्च विविधान् बहून् ।
तपस्वी नियताहारः शेते शीते महीतले ॥ २८ ॥
सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूं नदीम् ॥ २९ ॥
अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः ।
कथं त्वपररात्रेषु सरयूमवगाहते ॥ ३० ॥
पद्मपत्रेक्षणः श्यामः श्रीमान्निरुदरो महान् ।
धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ ३१ ॥

बाष्पो धूमः उष्मा वा ॥ २४ ॥

अगाग्रस्थं पर्वताग्रस्थम् ॥ २५ ॥

जरया कालकृतया जर्ज्जरितानि पर्णानि येषां तैः शीर्णानि केसराणि कर्णिकानि च येषां तैः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

* अगाधस्थमपि इति वा पाठः

प्रियाभिभाषी मधुरो दीर्घबाहुररिन्दमः।
संत्यज्य विविधान् सौख्यानार्य्यं सर्वात्मनाश्रितः॥ ३२॥
जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना।
वनस्थमपि तापस्ये यस्त्वामनुविधीयते॥ ३३॥
न पित्र्यमनुवर्त्तन्ते मातृकं द्विपदा इति।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथाकृतः॥ ३४॥
भर्त्ता दशरथो यस्याः साधुश्च भरतः सुतः।
कथं नु साम्बा कैकेयी तादृशी क्रूरदर्शिनी॥ ३५॥
इत्येवं लक्ष्मणे वाक्यं स्नेहाद्वदति धार्मिके।

निरुदरः अतुन्दिलः क्रिया परनारीविषये निषेधश्चक्षुरादीन्द्रियनिवर्त्तनं यस्य सः। तत्र हेतुर्जितेन्द्रियत्वम्॥ ३१॥

सौख्यान् सौख्यसाधनान्। आर्य्यं त्वां सर्वात्मना श्रितः। त्वत्सदृशव्यवहारवान् सर्वात्मना इतरथामङ्गत्यागपूर्वकं त्वद्विषयमननादिमानित्यर्थः इति कतकः॥ ३२॥

स्वर्गो जित एव स्वाधीनः कृतः यतो वनस्थमपि त्वां तापस्ये तापसधर्मे स्थित्वा अनुविधीयते अनुकरोति सेवत इत्यर्थः। श्रीडो दैवादिकस्य रूपम्॥॥ ३३॥

द्विपदा मनुष्याः पित्र्यं स्वभावं नानुवर्त्तन्ते किन्तु मातृकं स्वभावमनुवर्त्तन्त इति प्रसिद्धो लोकवादो भरतेनान्यथाकृतः। पितृस्वभाव एवाङ्गीकृतो न मातुरित्यर्थः॥ ३४॥

परिवादं जनन्यास्तमसहन् राघवोऽब्रवीत् ॥ ३६ ॥
न तेऽम्बा मध्यमा तात ! गर्हितव्या कदाचन ।
तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ॥ ३७ ॥
निश्चितैव हि मे बुद्धिर्वनवासे दृढव्रता ।
भरतस्नेहसन्तप्ता बालिशीक्रियते पुनः ॥ ३८ ॥
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ।
हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ३९ ॥
कदा ह्यहं समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ! ॥ ४० ॥
इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् ।
चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ४१ ॥

भरतं स्तुत्वा कैकेयीं निन्दति । भर्त्तेत्यादि ॥ ३५ ॥

स्नेहात् भरतरामयोः स्नेहात् ॥ ३६ ॥

न गर्हितव्या दैवकृतत्वात् तद्बुद्धेस्तामेव पूर्वोक्तामेव ॥ ३७ ॥

बालिशीक्रियते गुणाश्रयस्य भरतस्य वियोगमसहमाना चाञ्चल्यं प्राप्नोतीत्यर्थः ॥ ३८ ॥

स्नेहमेव प्रकाशयति,—संस्मरामीति । प्रियाण्यपि केनचिदुच्यमानानि कर्णकठोराणि भवन्तीति मधुराणीति । हृद्यानि मन्त्रवत् परहृदयबन्धनानि । सामान्यतो माधुर्यमुक्त्वाऽतिशयेनाह,—अमृतकल्पानीति । अतएव मनःप्रह्लादनानि ॥ ३९ ॥

तर्पयित्वाथ सलिलैस्तैः पितॄन् देवतगनपि ।
स्तुवन्ति स्मोदितं सूर्य्यं दैवतांश्च तथानघाः ॥ ४२ ॥

कृताभिषेकः स रराज रामः
सीता द्वितीयः सह लक्ष्मणेन ।
कृताभिषेकस्त्वगराजपुत्र्या
रुद्रः सनन्दिर्भगवानिवेशः ॥ ४३ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे शीतऋतु-
वर्णनं नाम षोड़शः सर्गः ॥ १६ ॥

त्वयेत्यस्य सहित इति शेषः ॥ ४० ॥ ४१ ॥ ४२ ॥
सन्दोपमया संसाराविस्टचित्तत्वं दर्शयति ॥ ४३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे षोड़शः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
तस्माद्गोदावरीतीरात् ततो जग्मुः स्वमाश्रमम् ॥ १ ॥
आश्रमं तदुपागम्य राघवः सहलक्ष्मणः ।
कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥ २ ॥
उवास सुखितस्तत्र पूज्यमानो महर्षिभिः ।
स रामः पर्णशालायामासीनः सह सीतया ॥ ३ ॥
विरराज महाबाहुश्चित्रया चन्द्रमा इव ।
लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ४ ॥
तथासीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ५ ॥
सा तु शूर्पनखा नाम दशग्रीवस्य रक्षसः ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥

ततः अवगाहनोत्तरम् ॥ १ ॥
पौर्वाह्णिकं प्रातःकालिकम् । पर्णशालां बाह्याम् ॥ २ ॥ ३ ॥
चित्रया चित्रानक्षत्रेण ॥ ४ ॥ ५ ॥
शूर्पनखा नखमुखात् संज्ञायामिति ङीपो भावः ॥ ६ ॥

सिंहोरस्कं महाबाहुं पद्मपत्रायतेक्षणम्।
गजविक्रान्तगमनं जटामण्डलधारिणम् ॥ ७ ॥
दीप्तास्यञ्च महासत्त्वं पार्थिवव्यञ्जनान्वितम्।
राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम् ॥ ८ ॥
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता।
सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ॥ ९ ॥
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा।
प्रियरूपं विरूपा सा सुस्वरं भैरवस्वना ॥ १० ॥
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी।
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ॥ ११ ॥
शरीरजसमाविष्टा राक्षसी राममब्रवीत्।
जटी तापसवेशेन सभार्य्यः शरचापधृक् ॥ १२ ॥
आगतस्त्वमिमं देशं कथं राक्षससेवितम्।
किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥ १३ ॥

दीप्तास्यं कान्तिमन्मुखम्। गजस्येव मन्दतया विक्रान्तं गमनं यस्य ॥ ८ ॥

सुमुखमित्यादि विषयालङ्कारोऽयं ॥ ९ ॥ १० ॥

दारुणा अदारुणमिति शेषः। दक्षिणं शुभाषिणं वामभाषिणी दुष्टभाषिणी ॥ ११ ॥

शरीरजः कामः ॥ १२ ॥

एवमुक्तस्तु राक्षस्या शूर्पणख्या परन्तपः।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे * ॥ १४ ॥
आसीद्दशरथो नाम राजा त्रिदशविक्रमः।
तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १५ ॥
भ्रातायं लक्ष्मणो नाम यवीयान्मामनुव्रतः।
इयं भार्य्या च वैदेही मम सीतेति विश्रुता ॥ १६ ॥
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः।
धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ॥ १७ ॥
त्वां तु वेदितुमिच्छामि कस्य त्वं कासि कस्य वा।
त्वं हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ॥ १८ ॥

तत्त्वं यथा तथा आख्यातुमर्हसि ॥ १३ ॥

शूर्पणखेति यौगिकं ऋजुबुद्धितया तथैव ॥ १४ ॥ १५ ॥ १६ ॥

नियोगात् आज्ञाबलात् यन्त्रितः नियतः धर्मकाङ्क्षी पितृवाक्यनिर्वहणरूपधर्माभिलाषी। धर्मार्थं तस्यैव धर्मस्य परिपालनाय ॥ १७ ॥

कस्य त्वं कस्येति शेषः। कासि किं नामासि कस्य वंशजेति शेषः। राक्षसी एवं मनोज्ञाङ्गत्वस्य कामरूपत्वं विनाऽसम्भवात् कामरूपत्वञ्च राक्षसीत्वं विना नेति भावः ॥ १८ ॥

---

* अनृतं न हि रामस्य कदाचिदपि सम्मतम्।
विशेषादाश्रमस्थस्य समीपे स्त्रीजनस्य च ॥

इत्यतिरिक्तं पाश्चात्त्याः।

इह वा किं निमित्तं त्वमागता ब्रूहि तत्त्वतः।
साब्रवीद्वचनं श्रुत्वा राक्षसी मदनार्दिता ॥ १९ ॥
श्रूयतां राम! तत्त्वार्थं वक्ष्यामि वचनं मम।
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ॥ २० ॥
अरण्यं विचरामीदमेका सर्वभयङ्करा।
रावणो नाम मे भ्राता यदि ते श्रोत्रमागतः * ॥ २१ ॥
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः।
विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ॥ २२ ॥
प्रख्यातवीर्य्यौ च रणे भ्रातरौ खरदूषणौ ॥ २३ ॥
तानहं समतिक्रान्ता राम! त्वा पूर्वदर्शनात्।

मदनार्दिता रामदर्शनादिति शेषः ॥ १९ ॥ २० ॥
यदि ते श्रोत्रमागतः प्रायः श्रुत एव भविष्यतीति भावः ॥ २१ ॥
सदा प्रवृद्धनिद्र इत्यन्वयः ॥ २२ ॥
भ्रातरौ खरदूषणौ विभीषणवत् त्रिशिरा अराक्षसस्वभावत्वात् नोक्तः ॥ २३ ॥
तान् रावणादीन् वीर्य्येण समतिक्रान्ता ततोऽधिकातस्तान् समति-

* रावणो नाम मे भ्राता राक्षसो राक्षसाधिपः।
सोऽयं विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ॥
इति वा पाठः।

समुपेतास्मि भावेन भर्त्तारं पुरुषोत्तमम् ॥ २४ ॥
अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी ।
चिराय भव भर्त्ता मे सीतया किं करिष्यसि ॥ २५ ॥
विकृता च विरूपा च न चेयं सदृशी तव ।
अहमेवानुरूपा ते भार्य्यारूपेण पश्य माम् ॥ २६ ॥
इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन सह ते भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २७ ॥

क्रान्ता त्वदभिसरणे तन्निमित्तभयरहितेत्याहत्यायेोन्यम् । हे राम त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य । यद्वा पूर्वदर्शनात् देवादिस्थितः प्रागहष्टदिव्यत्वरूपदर्शनाद्धेतोर्भावेन. त्वां पुरुषोत्तमं भर्त्तारं सर्वजगतां भर्त्तारं समुपेतास्मि ॥ २४ ॥

प्रभावसम्पन्ना प्रकृष्टेन भावेन शृङ्गारेण सम्पन्ना । यद्वा प्रभावेण प्राकृत्यतिशयेन सम्पन्ना । अतएव स्वच्छन्देन स्वेच्छया बलेन च सर्वलोकगमनशीला । यदेवमतश्चिरायेति ॥ २५ ॥

आत्मनो देवयोनिभेदत्वेनाभिमतग्रहणसामर्थ्याभिमानेन स्वस्मिन् रामप्रवृत्तये सीतादूषणमाह,—विकृता चेति । विकृता मायास्वरूपतया परिणामाख्यविकारवती । विरूपा नानारूपोपावचकार्य्यकारी अतएव शुद्धमुक्तस्वभावस्य तव न सदृशीति परमार्थः । यथा श्रुतार्थस्तु स्पष्ट एव । अहमेवानुरूपा उभयोरपि मायाधिष्ठातृत्वादित्यर्थः ॥ २६ ॥

वैरूप्यमेवाह, निर्णतोदरीम् अत्यन्तनिम्नोदरीम् असतीम् स्वपुरुषस्य दुस्तरानेकसंसारदुःखदत्वात् कार्य्यरूपेण सतीश्च । त्वया सह प्रौक्ता

ततः पर्वतशृङ्गाणि वनानि विविधानि च।
पश्यन् सह मया कामी दण्डकान् विचरिष्यसि ॥ २८ ॥
इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणः।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
शूर्पनखागमनं नाम सप्तदशः सर्गः ॥ १७ ॥

निर्मनुष्ये वने आगमनाद्यासतीम्। सती हि वृद्धानां श्वश्र्वादीनां सविधे एव पातिव्रत्यरक्षणाय तिष्ठेदित्याशयः ॥ २७ ॥ २८ ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः।

तान्तु शूर्पनखां रामः कामपाशावपाशिताम्।
स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत्॥ १॥
कृतदारोस्मि भवति! भार्य्येयं दयिता मम।
त्वद्विधानां तु नारीणां सुदुःखाय सपत्नता॥ २॥
अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्य्यवान्॥ ३॥
अपूर्वी भार्य्यया चार्थी तरुणः प्रियदर्शनः।

तामिति। कामपाशेनावपाशितां सञ्जातपाशबन्धाम्। स्वेच्छयेति पाठे परिहासविनोदेनेत्यर्थः। अतएव स्मितपूर्वमिति तीर्थः। स्वच्छन्दामिति पाठो युक्तः। स्वेच्छाचारिणीमित्यर्थः॥ १॥

कृतदारः ऊढभार्य्यः। भवतीति संबुद्धिः। इयं भार्य्या मम दयिता सन्निहिता चेति शेषः। ससपत्नता सशत्रुता पत्युर्भार्य्यान्तरं हि भार्य्यान्तरस्य शत्रुभूतं भवति। सपत्नीसाहित्यमिति वार्थः। अगुणवचत्वेऽप्यार्षः पुंवद्भावः। सपत्नीशब्दस्य सपत्नप्रकृतिकोऽपि भर्तुर्द्वितीयभार्य्यायामेव रूढ़ इति ध्येयम्॥ २॥

अकृतदारः अकृतपरदारपरिग्रह इति। धातूनामनेकार्थत्वादसन्निहितदार इति वा हृदिस्थोऽर्थः न हि रामो मिथ्या ब्रूते परिहासादौ मिथ्याभाषणे न दोष इत्यनेन सूच्यते इति वयम्। एवमुत्तरत्रापि॥ ३॥

अनुरूपश्च ते भर्त्ता रूपस्यास्य भविष्यति । ४ ॥
एनं भज विशालाक्षि ! भर्त्तारं भ्रातरं मम ।
असपत्ना वरारोहे ! मेरुमर्कप्रभा यथा ॥ ५ ॥
इति रामेण सा प्रोक्ता राक्षसी काममोहिता ।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥
अस्य रूपस्य ते युक्ता भार्य्याहं वरवर्णिनी ।
मया सह सुखं सर्वान् दण्डकान् विचरिष्यसि ॥ ७ ॥
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
ततः शूर्पनखां स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥ ८ ॥
कथं दासस्य मे दासी भार्य्या भवितुमिच्छसि ।
सोऽहमार्य्येण परवान् भ्रात्रा कमलवर्णिनि ! ॥ ९ ॥

अपूर्वी इतः प्रागभार्य्यासुखानभिज्ञोऽतएव भार्य्यार्थी प्रयोजनवान्। आन्तराशयस्तु इतः पूर्वं परभार्य्यासुखानभिज्ञः। भार्य्यार्थी स्वभार्य्यार्थीति। अस्य ते रूपस्यायमनुरूपो भविष्यति यद्यङ्गीकरिष्यतीति शेषः॥ ४ ॥

भर्त्तारमेनं भजेत्यन्वयः। भर्तृत्वेन सेवस्वेति यावत्। असपत्ना साम्प्रतमिति शेषः। अर्कप्रभा मेरुं यथा भजति तथा। एवंविधोऽपि वादो रामस्य स्वं प्रति काममोहितः प्राप्तायाः शाक्धिक्कारे दुःखं माभूदित्याशयः॥ ५ ॥ ६ ॥ ७ ॥

शूर्पनखीमिति शुद्धयौगिकम् ॥ ८ ॥

समृद्धार्थस्य सिद्धार्था मुदिता वरवर्णिनी।
आर्य्यस्य त्वं विशालाक्षि! भार्य्या भव यवीयसी॥ १०॥
एतां विरूपामसतीं करालां निर्णतोदरीम्।
भार्य्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति॥ ११॥
को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि!।
मानुषीषु वरारोहे! कुर्य्याद्भावं विचक्षणः॥ १२॥
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी।
मन्यते तद्वचः सत्यं परिहासाविचक्षणा॥ १३॥
सा रामं पर्णशालायामुपविष्टं परन्तपम्।
सीतया सह दुर्धर्षमब्रवीत् काममोहिता॥ १४॥
इमां विरूपामसतीं करालां निर्णतोदरीम्।
वृद्धां भार्य्यामवष्टभ्य न मां त्वं बहुमन्यसे॥ १५॥

दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसीति योजना। परवान् पराधीनः। कमलवर्णिनी रक्तकमलसदृशवर्णवती॥ ९॥१०॥

एतामिति। परमार्थस्तु विशिष्टरूपां विरूपां त्रैलोक्यसुन्दरीम् असतीं न विद्यतेऽन्या सती यस्यास्ताम्। करालाम् अवयवसन्निवेशैर्युक्तै-र्निम्नोन्नताम्। निर्णतोदरीं तनुमध्यां अर्थान्तरमपि प्रागुक्तरीत्या द्रष्टव्यम्। वृद्धां ज्ञानवृद्धाम् अनादिश्च॥ ११॥ १२॥

कराला दारुणा परिहासाविचक्षणा तत्तद्वाक्ये परिहासलक्षणरहिता॥ १३॥ १४॥ १५॥

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम्।
त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६ ॥
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा।
अभ्यगच्छत् सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः।
निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८ ॥
क्रूरैरनार्य्यैः सौमित्रे! परिहासः कथञ्चन।
न कार्य्यः पश्य वैदेहीं कथञ्चित् सौम्य! जीवतीम् ॥१९॥
इमां विरूपामसतीमतिमत्तां महोदरीम्।
राक्षसीं पुरुषव्याघ्र! विरूपयितुमर्हसि ॥ २० ॥
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः।
उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबलः ॥ २१ ॥

पश्यतस्तव पश्यन्तं त्वामनादृत्य ॥ १६ ॥ १७ ॥

निगृह्य वाचेति शेषः ॥ १८ ॥

अनार्य्यैः परिहासो न कथमपि कार्य्य इत्यत्रानुभवं प्रमाणयति। पश्य वैदेहीं भक्षयितुमुद्युक्तामतत्कृतपरिहासदोषादिति शेषः। इदं परिहासेनाप्यनृतवचनं सत्यनिष्ठस्य रामस्य सर्वानर्थमूलं मूलविद्यायां मायायां बीजावेशमूलस्येति कतकः। हे सौम्य कथञ्चिज्जीवतीमेवेत्युत्तरश्लोकान्वयि ॥ १९ ॥

इमां सतो विरूपां विरूपय पार्श्वस्थित इति शेषः ॥ २० ॥

निकृत्तकर्णनासा तु विस्वरं सा विमद्य च ।
यथागतं प्रदुद्राव घोरा शूर्पनखा वनम् ॥ २२ ॥
सा विरूपा महाघोरा राक्षसी शोणितोक्षिता ।
ननाद विविधान् नादान् यथा प्रावृषि तोयदः ॥ २३ ॥
सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना ।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४ ॥
ततस्तु सा राक्षससङ्घसंवृतं खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रतेजसं*पपात भूमौ गगनाद् यथाशनिः ॥२५॥

कर्णनासे इति आर्षत्वादेकवत्त्वाभावः ॥ २१ ॥ २२ ॥
विविधान् नादान् ननाद चकारेत्यर्थः ॥ २३ ॥
प्रगृह्य उद्यम्य ॥ २४ ॥
अशनिरिव गगनाद्भूमौ पपात ॥ २५ ॥

अथास्याः खरं प्रति स्ववृत्तान्तकथनं कविः संक्षिप्याह,—तत इति । भयजनितमोहेन विसंज्ञतया मूर्च्छिता व्याघ्रा राघवं वनमागतं शशंस । आत्मविरूपणञ्च शशंस । अत्रेदं बोध्यम् । दशवर्षगमनोत्तरं पुनः सुतीक्ष्णाश्रमगमनं रामस्य तत्र च वर्षाकालापगमपर्य्यन्तं स्थित्वा किञ्चिच्छिष्टे एकादशे अगस्त्याश्रमगमनम् । ततो वर्षाकालारम्भे पञ्चवट्यां वासः मयूरनादिता रम्या इति तत्रोक्तेः । एवं वसतस्तस्य शरद्यपाये हेमन्तर्तुः प्रविष्ट इत्युक्तेश्च द्वादशवर्षपूर्त्तिः । पञ्चमे पञ्चमे वर्षे द्वौ द्वावधिक-

* उपदर्शनम् इति वा पाठः ।

ततः सभार्य्यं भयमोहमूर्च्छिता सलक्ष्मणं राघवमागतं वनम्।
विरूपणं चात्मनि शोणितोचिता शशंस सर्वं भगिनी खरस्य सा॥२९॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे शूर्पनखाविरूपणं नाम अष्टादशः सर्गः॥ १८॥

मासकाविव्युत्क्रमेमार्गशुक्लैकादश्यां त्रयोदशारम्भः। अतएव पाद्मे उक्तम्। तत्र तु द्वादशाब्दानि रामस्य अतिचक्रमुः। कस्मिंश्चिदथ काले तु राक्षसी कामरूपिणी। तत्र शूर्पनखा भेजे राघवं रावणानुजेति केचित्। अन्ये तु त्रयोदशे किञ्चिदवशिष्टे शूर्पनखागमनम्। ततो माघे सीताहरणमित्याहुः। भारते युधिष्ठिरवनवासस्य अधिकमासं गृहीत्वार्वागेव समाप्तिः। पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः। एषा मध्यधिका मासाः पञ्च च द्वादशक्षपाः॥ त्रयोदशानां वर्षाणामिति मे वर्त्तते मतिरिति भीष्मेणोक्तत्वात् तद्रीत्यात्रापि तथैवोचितमिति पूर्वव्याख्यैव युक्तेति मम भाति। यत्तु तत्र त्रयोदशाब्दानि रामस्य अतिचक्रमुरिति पाद्मे पाठः क्वचित्। तत्रापि प्रवेशमात्रेण तदतिक्रमव्यवहारः। यथान्ये तु वादिनामर्द्धावस्थितौ तद्व्यवहार इति बोध्यम्। प्रचुरस्तु द्वादशाब्दानीत्येव पाठः॥ २९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे अष्टादशः सर्गः॥ १८॥

## एकोनविंशः सर्गः ।

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।
भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥

उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् ।
व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ॥ २ ॥

कः कृष्णसर्पमासीनमाशीविषमनागसम् ।
तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३ ॥

कालपाशं समासज्य कण्ठे मोहान्न बुध्यते ।
यस्त्वामद्य समासाद्य पीतवान् विषमुत्तमम् ॥ ४ ॥

बलविक्रमसम्पन्ना कामगा कामरूपिणी ।
इमामवस्थां नीता त्वं केनान्तकसमागता ॥ ५ ॥

अथ पूर्वसर्गान्ते संक्षिप्ततया कथितार्थस्यैव विस्तारः । तामिति ॥१॥

प्रमोहो विसंज्ञता संभ्रमश्चित्ताप्रतिष्ठानम् । एवंरूपा अतिप्रसिद्ध-सौन्दर्या त्वं केन विरूपितेत्यन्वयः ॥ २ ॥

आशिषि दंष्ट्रायां विषं यस्य तम् । पृषोदरादित्वात् साधुः । अभिसमापन्नमभिमुखे स्थितं तुदति व्यथयति ॥ ३ ॥

उत्तमं विषं त्वद्विरूपतालक्षणम् ॥ ४ ॥

अन्तकसमा त्वं कस्य समीपं गता येनेमामवस्थां नीता अन्तकसमा

देवगन्धर्वभूतानामृषीणाञ्च महात्मनाम् ।
कोऽयमेवं महावीर्य्यस्त्वां विरूपां चकार ह ॥ ६ ॥
न हि पश्याम्यहं लोके यः कुर्य्यान्मम विप्रियम् ।
अमरेषु सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥
अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तगैः ।
सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥
निहतस्य मया संख्ये शरसंकृत्तमर्मणः ।
सफेनं रुधिरं कस्य मेदिनी पातुमिच्छति ॥ ९ ॥
कस्य पत्ररथाः कायान् मांसमुत्कृत्य सङ्गताः ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥

त्वं केनेमामवस्थां नीता सती अत्रागतेत्यर्थो वा ॥ ५ ॥

महात्मनां मध्ये इति शेषः ॥ ६ ॥

महेन्द्रमिति सहस्राक्षत्वपाकशासनत्वे विशेषणे महेन्द्रमित्यस्यान्तरेणेति शेषः। पश्यामीत्यत्र तमित्यध्याहारः। मनुष्यादीनान्तु स्वाप्रियकरणे सम्भावनैव नेति भावः। क्वचित्तु अन्तरेण सहस्राक्षमित्येव पाठः ॥ ७ ॥

जीवितस्यान्तं गमयन्ति प्रापयन्ति तैः त्वया निष्पिबन् सारसो हंसो यथा सलिले आसक्तं क्षीरमादत्ते एवं प्राणानादास्ये इत्यर्थः ॥ ८ ॥

शरैः संकृत्तानि मर्माणि यस्य तस्य कण्ठकर्त्तनकालिकं सफेनमित्युपलक्षणम्। दीर्घधारं सोष्णञ्च ॥ ९ ॥

तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
मयापकृष्टं कृपणां शक्तास्त्रातुं महाहवे ॥ ११ ॥
उपलभ्य शनैः संज्ञां तन्मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२ ॥
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३ ॥
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥
फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १६ ॥
तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥

सङ्गता मिलिताः पत्ररथाः पक्षिणः ॥ १० ॥ ११ * ॥
विक्रम्य शौर्य्यं कृत्वा ॥ १२ ॥ १३ ॥
श्रीरामचन्द्रे दोषाणामभावाद्गुणोक्त्यैव तं बोधयति । तरुणावि-
त्यादि । व्याख्यातप्रायम् ॥ १४ ॥ १५ ॥

* मयापकृष्टं आक्रान्तं मया सह कृतविरोधमिति यावत् ।

ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम्।
इमामवस्थां नीताहं यथानाथासती तथा॥ १८॥
तस्यास्ताहगुवृत्तायास्तयोश्च हतयोरहम्।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि॥ १९॥
एष मे प्रथमः कामः कृतस्तत्र त्वया भवेत्।
तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे॥ २०॥
इति तस्यां ब्रुवाणायां चतुर्दशमहाबलान्।
व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान्॥ २१॥

देवौ वेति। यद्यपि दशरथपुत्राविति तत्वकाशाच्छ्रुतमथापि अमानुषचारित्र्यदर्शनादेनिश्चय इति भावः॥ १६॥ १७॥

तां प्रमदामधिकृत्य निमित्तीकृत्य ताभ्यामुभाभ्यां संभूयैकनियोगादपरेणेमामवस्थां नीता। यथाऽनाथा असती कुलटा तथेत्यन्वयः॥ १८॥

तस्या हताया इति विपरिणामः। रुधिरं पातुमिच्छामीत्यनेन तस्यास्तत्कामुकीत्वशङ्कां वारयति॥ १९॥

उक्तमेवार्थमुत्कटेच्छाद्योतनाय पुनराह,—एष इति॥ २०॥

चतुर्दशेति प्रभुतया रामे मानुषबुद्ध्या च सेनारहितानामेव चतुर्दशानां प्रेषणम्। यद्यपि

याज्ञवल्क्यसुता राजन् त्रयो वै लोकविश्रुताः।
चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमाः॥

मानुषौ शस्त्रसम्पन्नौ चीरकृष्णाजिनाम्बरौ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह॥ २२॥
तौ हत्वा तां च दुर्वृत्तामुपावर्त्तितुमर्हथ।
इयञ्च भगिनी तेषां रुधिरं मम पास्यति॥ २३॥
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः!।
शीघ्रं सम्पाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा॥ २४॥
युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे।
इयं प्रहृष्टा मुदिता रुधिरं युधि पास्यति॥ २५॥
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश।

खरश्च दूषणश्चैव त्रिशिराश्च ब्रह्मवित्तमाः।
आसन् तेषाञ्च शिष्याश्च चतुर्दशसहस्रधा॥
इति शान्तिधर्मे भीष्मोक्तेरग्रे तेषां शिवशापेन राक्षसत्वं दाशरथेर्विष्णोर्हस्तेन शापमोक्षश्चोक्तस्तथापि शापवशादेव राक्षसयोनित्वाद् भगवद्रूपाज्ञानमादौ प्राणवियोगकाले च शापान्तं स्मृत्वा तत्स्वरूपज्ञानात् स्वस्वरूपप्राप्तिः। ब्रह्मवित्तमा इत्यत्र ब्रह्मवेद इत्याहुः॥ २१॥ २२॥

मम भगिनीयं तेषां रुधिरं पास्यतीत्यन्वयः। अत्र रुधिरं मम पास्यतीति विपरीतार्थासक्तियुक्तवाक्येन तेषां सन्निधानप्रयुक्तो बुद्धिमोहः सूचितः कविना॥ २३॥ २४॥ २५॥

तत्र जग्मुस्तया सार्धं घना वातेरिता इव * ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे खराज्ञया रामसमीपे राक्षसागमनं नाम एकोनविंशः सर्गः ॥ १९ ॥

वातनुन्ना मेघा इव जग्मुरिति सम्बन्धः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

* ततस्तु ते राघवमुग्रतेजसं
तृष्णा सुतीक्ष्णप्रहरास्तु राक्षसाः ।
न शेकुरेनं सहसा प्रमर्दितुं
वनद्विपा दीप्तमिवाग्निमुत्थितम् ॥

इत्यतिरिक्तं पाश्चात्याः ।

## विंशतितमः सर्गः ।

ततः शूर्पनखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १ ॥
ते रामं पर्णशालायामुपविष्टं महाबलम् ।
ददृशुः सीतया सार्धं लक्ष्मणेनापि सेवितम् ॥ २ ॥
तां दृष्ट्वा राघवः श्रीमानागतांस्तांश्च राक्षसान् ।
अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥
मुहूर्त्तं भव सौमित्रे ! सीतायाः प्रत्यनन्तरः ।
इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४ ॥
वाक्यमेतत् ततः श्रुत्वा रामस्य विदितात्मनः ।
तथेति लक्ष्मणो वाक्यं राघवस्य प्रपूजयन् ॥ ५ ॥
राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्जं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥

तत इति । सह सीतया वर्त्तमानाविति शेषः ॥ १ ॥ २ ॥ ३ ॥
प्रत्यनन्तरः प्रत्यासन्नः पालक इति यावत् । अस्याः पदवीं मार्गम्
अस्याः पक्षपातेनास्मद्वधार्थमागतानिति यावत् ॥ ४ ॥ ५ ॥
चामीकरं स्वर्णम् ॥ ६ ॥ ७ ॥

फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ।
वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८ ॥
युष्मान् पापात्मकान् हन्तुं विप्रकारान्महाहवे।
ऋषीणां तु नियोगेन संप्राप्तः सशरासनः ॥ ९ ॥
तिष्ठतैवात्र संतुष्टा नोपसर्पितुमर्हथ।
यदि प्राणैरिहार्थो वो निवर्त्तध्वं निशाचराः ॥ १० ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश।
ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥ ११ ॥
संरक्तनयना घोरा रामं संरक्तलोचनम्।
परुषा मधुराभाषं हृष्टादृष्टपराक्रमम् ॥ १२ ॥

उपहिंसथ यूयमस्मानिति शेषः ॥ ८ ॥

अनपकारिणामस्माकं हिंसार्थया युष्मत्प्रवृत्त्या युष्मद्वधार्थमस्मदपेक्षितनिमित्तं सम्पन्नमित्याह,—युष्मानिति। विप्रकारात् भवत्कृतपीड़ारूपान्निमित्ताज्जातनियोगेन युष्मान् हन्तुं सशरासनोऽहं संप्राप्तः संप्राप्तनिमित्तः। यद्वा विप्रकारानित्यर्श आद्यजन्तम्। अस्मास्वस्मदीयेषु च वृथावैरवतो युष्मानित्यर्थः ॥ ९ ॥

अतः सन्तुष्टा मत्तः प्राप्तयुद्धसन्तोषाः। यूयमत्र तिष्ठतैव नोपवर्त्तितुमर्हथ। उपसर्पितुमिति पाठेऽप्ययमेवार्थः। इहार्थः इह लोके देहे चेत्यर्थः ॥ १० ॥

ब्रह्मघ्ना इत्यार्षम् ॥ ११ ॥

क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
त्वमेव हास्यसे प्राणान् सद्योऽस्माभिर्हतो युधि ॥ १३ ॥
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥
एभिर्बाहुप्रयुक्तैश्च परिघैः शूलपट्टिशैः ।
प्राणांस्त्यक्ष्यसि वीर्यञ्च धनुश्च करपीडितम् ॥ १५ ॥
इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश * ।
उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ॥ १६ ॥
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ।
तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ॥ १७ ॥
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषितैः † ।

अदृष्टपराक्रममिति च्छेदः सन्धिरार्षः ॥ १२ ॥ १३ ॥
स्थातुमपि का ते शक्तिरिति योजना ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

* अन्तरीक्षे महोल्कानां बभूवुस्तुल्यदर्शनाः ।
इत्यतिरिक्तं पाश्चात्याः ।

† अभिपत्य ततो वेगाच्चिक्षिपुस्ते निशाचराः ।
परिघान् पट्टिशान् शूलान् चतुर्दश चतुर्दश ॥
तानागतान् प्रचिच्छेद समस्तान् सवरायुधान् ।
चतुर्दशभिरव्यग्रः शरैः काञ्चनभूषणैः ॥
इत्यतिरिक्तं पाश्चात्याः ।

ततः पश्यन् महातेजा नाराचान् सूर्य्यसन्निभान्॥ १८॥
जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान्।
गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान्॥ १९॥
मुमोच राघवो बाणान् वज्रानिव शतक्रतुः।
ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः॥ २०॥
विनिष्पेतुस्तदा भूमौ वल्मीकादिव पन्नगाः।
तैर्भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः॥ २१॥
निपेतुः शोणितस्नाता विकृता विगतासवः।
तान् भूमौ पतितान् दृष्ट्वा राक्षसी क्रोधमूर्च्छिता *॥२२॥
उपगम्य खरं सा तु किञ्चित् संशुष्कशोणिता।
पपात पुनरेवार्त्ता सनिर्यासेव वल्लरी॥ २३॥

तावद्भिश्चतुर्दशरक्षोविमुक्तचतुर्दशशूलसंख्याकैः॥ १८॥
शिलाशितान् शाणोपलनिघृष्टान्॥ १९॥ २०॥
विनिष्पेतुः विनिष्पत्य च निममज्जुः। वल्मीकाद्वल्मीकं प्राप्य पन्नगा इव निमग्ना इत्यर्थः॥ २१॥ २२॥

---

* परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान्।
सा नदन्ती महानादं जवाच्छूर्पनखा पुनः।
जगाम तत्र संभ्रान्ता खरो यत्र महाबलः॥
इत्यतिरिक्तं पाश्चात्त्याः

भ्रातुः समीपे शोकार्त्ता ससर्ज निनदं महत् * ।
सस्वरं मुमुचे बाष्पं विवर्णवदना तदा ॥ २४ ॥
निपातितान् प्रेक्ष्य रणे तु राक्षसान्
प्रधाविता शूर्पणखा पुनस्ततः ।
वधञ्च तेषां निखिलेन रक्षसां
शशंस सर्वं भगिनी खरस्य सा ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे खरसमीपे शूर्पणखागमनं नाम विंशतितमः सर्गः ॥ २० ॥

नासाकर्णच्छेदांशे किञ्चित् संशुष्कशोणितत्वात् सनिर्यासा वल्लरीव ॥ २३ ॥ २४ ॥

उत्तरसर्गार्थस्य संक्षेपतः कथनम् ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे विंशतितमः सर्गः ॥ ॥

---

* भूमौ शयाना दुःखार्त्ता लब्धसंज्ञाचिरात् पुनः ।
इत्यतिरिक्तं पाश्चात्त्याः ।

# एकविंशः सर्गः ।

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः ।
उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १ ॥
मया त्विदानीं शूरास्ते राक्षसाः पिशिताशनाः ।
त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥
भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः ।
घ्नन्तोऽपि न हन्यन्ते न च कुर्य्युर्वचो मम ॥ ३ ॥
किमेतच्छ्रोतुमिच्छामि कारणं यत् कृते पुनः ।
हा नाथेति विनर्दन्ती सर्पवच्चेष्टसे क्षितौ ॥ ४ ॥
अनाथवद्विलपसि किन्नु नाथे मयि स्थिते ।
उत्तिष्ठोत्तिष्ठ मा भैस्त्वं वैक्लव्यं त्यज्यतामिति ॥ ५ ॥
इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता ।

अनर्थार्थं सकुलस्येति शेषः ॥ १ ॥ २ ॥

भक्ता अतएव मय्यनुरक्ता अतएव मम हिताः । परैर्हन्यमाना अपि ये न हन्यन्ते न हन्तुं शक्यन्ते मम वचो न कुर्य्युरिति च न तत् किमर्थं रुद्यत इत्यर्थः ॥ ३ ॥

विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥
अस्मीदानीमहं प्राप्ता हतश्रवणनासिका ।
शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥
प्रेषितास्त्र त्वया शूरा राक्षसास्ते चतुर्दश ।
निहन्तुं राघवं घोरं मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥
ते तु रामेण सामर्षाः शूलपट्टिशपाणयः ।
समरे निहताः सर्व सायकैर्मर्मभेदिभिः ॥ ९ ॥
तान् भूमौ पतितान् दृष्ट्वा क्षणेनैव महाजवान् ।
रामस्य च महत् कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥
सास्मि भीता समुद्विग्ना विषण्णा च निशाचर ! ।
शरणं त्वां पुनः प्राप्ता सर्वतो भयदर्शिनी ॥ ११ ॥
विषादनक्राध्युषिते परित्रासोर्मिमालिनि ।
किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥

यत् कृते यच्छोकनिमित्तम् ॥ ४ ॥ ५ ॥ ६ ॥

अहमिदानीं पूर्वं त्वत्समीपं प्राप्तास्मि त्वया च परिसान्त्वितास्मि । शूराश्च मदर्थं प्रेषितास्तद्वृत्तान्तं वक्ष्यामीति ॥ ७ ॥ ८ ॥ ९ ॥

क्षणेनैव नतु चिरकालयुद्धपूर्वमित्यर्थः । रामस्य च महत् कर्म दृष्ट्वेत्यनुषङ्गः ॥ १० ॥

भीता अतएव समुद्विग्ना । कम्पमाना अतएव विषसा दुःखिता । सर्वतोभयदर्शिनी । सर्वतो रामप्रतिभासनात् ॥ ११ ॥ १२ ॥

एते च निहता भूमौ रामेण निशितैः शरैः ।
ये च मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १३ ॥
मयि ते यद्यनुक्रोशो यदि रक्षःसुतेषु च ।
रामेण यदि शक्तिस्ते तेजो वास्ति निशाचर ! ॥ १४ ॥
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ।
यदि रामममित्रघ्नं * न त्वमद्य वधिष्यसि ॥ १५ ॥
तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा ।
बुध्याहमनुपश्यामि न त्वं रामस्य संयुगे ॥ १६ ॥
स्थातुं प्रतिमुखे शक्तः सबलोऽपि † महारणे ।
शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः ॥ १७ ॥
अपयाहि जनस्थानात् त्वरितः सहबान्धवः ।

ये च मे पदवीं प्राप्तास्त एते भूमौ स्थितेन पदादिना रामेण हताः ॥ १३ ॥

यदि ते शक्तिर्योद्धुमिति शेषः ॥ १४ ॥ १५ ॥

निरपत्रपा छिन्नकर्णनासिकत्वात् खरस्य क्रोधोत्पत्त्यर्थमाह,—बुध्येति ॥ १६ ॥

सबलोऽपि चतुरङ्गबलोपेतोऽपि । महारणे इत्युत्तरान्वयि । मिथ्या मृषेव स्वस्मिन्नारोपितो विक्रमो येन ॥ १७ ॥

---

* यदि रामं ममामित्रम् इति वा पाठः ।

† महापक्ष इति वा पाठः ।

जहि त्वं समर मूढ़ानन्यथा कुलपांसन ! ॥ १८ ॥
मानुषौ तौ न शक्नोषि हन्तुं वै रामलक्ष्मणौ ।
निःसत्त्वस्याल्पवीर्य्यस्य वासस्ते कीदृशस्त्विह ॥ १९ ॥
रामतेजोऽभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ।
स हि तेजःसमायुक्तो रामो दशरथात्मजः ॥ २० ॥
भ्राता चास्य महावीर्य्यो येन चास्मि विरूपिता ।
एवं विलप्य बहुशो राक्षसी प्रदरोदरी । २१ ॥
भ्रातुः समीपे शोकार्त्ता नष्टसंज्ञा बभूव ह ।
कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे शूर्पणखा भर्त्सनं नाम एकविंशः सर्गः ॥ २१ ॥

अतस्त्वं सहबान्धवस्त्वरितो जनस्थानादपयाहि निर्गच्छ । समरे तौ त्वं जहि हे कुलपांसन अन्यथा तु ॥ १८ ॥

तदेव व्याचष्टे । मानुषाविति । तौ हन्तुं यदि न शक्नोषि तदा निर्वीर्य्यत्वादिगुणस्य ते इह कीदृशो वासो जुगुप्सित एवेत्यर्थः ॥ १९ ॥

तामेव शक्तिं द्रढ़यति,—रामतेज इति ॥ २० ॥

प्रदरोदरी निम्नोदरी ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे एकविंशः सर्गः ॥ २१ ॥

# द्वाविंशः सर्गः ।

एवमाधर्षितः शूरः शूर्पणख्या खरस्ततः ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥
तवापमानप्रभवो क्रोधोऽयमतुलो मम ।
न शक्यते धारयितुं लवणाम्भ इवोल्बणम् ॥ २ ॥
न रामं गणये वीर्य्यान्मानुषं क्षीणजीवितम् ।
आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥ ३ ॥
बाष्पः सन्धार्य्यतामेष संभ्रमश्च विमुच्यताम् ।
अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥

आधर्षितः कोपादवमानितः खरस्तीक्ष्णगुणः खरतरं तीक्ष्णतरम् ॥ १ ॥

तवापमानेत्यस्य त्वत्कृतापमानेत्यर्थः । धारयितुमात्मनीति शेषः । ममेति मयेत्यर्थे सम्बन्धे षष्ठी । लवणाम्भ इवोल्बणम् । व्रणे इति शेषः । व्रणे निक्षिप्तं लवणयुक्तमम्भ इव धारयितुं न शक्यत इत्यर्थः इति तीर्थः । लवणाम्भो लवणसमुद्राम्भ इवेत्यर्थ इति कतकः ॥ २ ॥

आत्मदुश्चरितैस्त्वद्विरूपकरणरूपैः स्वयं हत एव मद्दर्शनात् प्राणान् मोक्ष्यते तं रामं न गणये इत्यन्वयः । वीर्य्यात् स्वपराक्रमात् ॥ ३ ॥

परश्वधहतस्याद्य मन्दप्राणस्य भूतले ।
रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ! ॥ ५ ॥
संप्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् ।
प्रशशंस पुनर्मौर्ख्याद् भ्रातरं रक्षसां वरम् ॥ ६ ॥
तया परुषितः पूर्वं पुनरेव प्रशंसितः ।
अब्रवीद् दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥
चतुर्दशसहस्राणि मम चित्तानुवर्त्तिनाम् ।
रक्षसां भीमवेगानां समरेष्वनिवर्त्तिनाम् ॥ ८ ॥
नीलजीमूतवर्णानां लोकहिंसाविहारिणाम् * ।

संभ्रमो भयम् ॥ ४ ॥

परश्वधहतस्येति परश्वधस्तस्य मुख्यमायुधमित्यनेन ज्ञायते रुधिरं रक्तं रक्तवर्णमित्यर्थः ॥ ५ ॥

मौर्ख्यात् अव्यवस्थितचित्ततालक्षणात् । पुनः प्रशशंस च त्वत्समो वीरो नास्तीत्येवमादि ॥ ६ ॥

तदेवाह,—तयेति ॥ ७ ॥

---

* नीलजीमूतवर्णानां घोराणां कामरूपिणाम् ।
तेषां शार्दूलदर्पाणां महास्यानां महात्मनां ।
लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥
इत्यतिरिक्तं पाश्चात्त्याः ।

सर्वोद्योगमुदीर्णानां रक्षसां सौम्य! कारय ॥ ९ ॥
उपस्थापय मे क्षिप्रं रथं सौम्य! धनूंषि च।
शरांश्च चित्रान् खड्गांश्च शक्तीश्च विविधाः शिताः ॥ १० ॥
अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम्।
वधार्थं दुर्विनीतस्य रामस्य रणकोविद! * ॥ ११ ॥
इति तस्य ब्रुवाणस्य सूर्य्यवर्णं महारथम्।
सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १२ ॥
तं मेरुशिखराकारं तप्तकाञ्चनभूषणम्।
हेमचक्रमसम्बाधं वैदूर्य्यमयकूबरम् ॥ १३ ॥
मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्य्यैश्च काञ्चनैः।
माङ्गल्यैः पक्षिसंघैश्च ताराभिश्च समावृतम् ॥ १४ ॥

यानि लोकानां प्राणिनां हिंसेवासाधारणेन विहारः क्रीड़ा येषां रक्षसां चतुर्दशसहस्राणि वर्त्तन्ते तेषां सर्वोद्योगं चतुरङ्गबलोपेततया सर्वायुधसामग्रीसमेततया चोद्योगं कारय ॥ ८ ॥ ९ ॥ १० ॥

पौलस्त्यानां राक्षसानामग्रे रामस्य वधार्थं निर्यातुमिच्छामीत्यन्वयः ॥ ११ ॥

शबलैश्चित्रवर्णैः आचचक्षे उपस्थितमिति शेषः ॥ १२ ॥

वैदूर्य्यमयौ कूबरौ युगन्धरौ यस्य तम् असम्बाधं विशालम् ॥ १३ ॥

---

* रणमर्द्धनि इति वा पाठः।

ध्वजनिस्त्रिंशसम्पन्नं किङ्किणीभिर्विभूषितम्।
सदश्वयुक्तं सामर्षादारुरोह खरस्तदा * ॥ १५ ॥
खरस्तु तन्महत्सैन्यं रथचर्मायुधध्वजम्।
निर्यातेत्यब्रवीत् प्रेक्ष्य दूषणः सर्वराक्षसान्॥ १६ ॥
ततस्तद्राक्षसं सैन्यं घोरचर्मायुधध्वजम्।
निर्जगाम जनस्थानान्महानादं महाजवम्॥ १७ ॥
मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः।
खड्गैश्चक्रैश्च हस्तस्थैर्भ्राजमानैः सतोमरैः॥ १८ ॥
शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः।
गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः॥ १९ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश।
निर्यातानि जनस्थानात् खरचित्तानुवर्त्तिनाम्॥ २० ॥

माङ्गल्यैर्मङ्गलमलङ्कारस्तत्प्रयोजनैः　काञ्चनैरिति मत्स्यादि सर्वान्वयि ॥ १४ ॥
किङ्किणी क्षुद्रघण्टिका। अमर्षात् क्रोधात्॥ १५ ॥
तन्महत्सैन्यं प्रेक्ष्य तत्प्रतिनिर्यातेत्यब्रवीत्। दूषणः दूषणश्चेत्यर्थः ॥१६॥
ततः उभयनियोगानन्तरं राक्षसं रक्षसामिदम्॥ १७ ॥

---

* निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः।
तस्थुस्ते परिवार्य्यैनं दूषणञ्च महाबलम्॥
इत्यतिरिक्तं प्राच्याः।

तांस्तु निर्धावतो दृष्ट्वा राक्षसान् भीमदर्शनान्।
खरस्याथ रथः किञ्चिज्जगाम तदनन्तरम् ॥ २१ ॥
ततस्ताञ्छबलानश्वांस्तप्तकाञ्चनभूषितान्।
खरस्य मतमाज्ञाय सारथिः पर्य्यचोदयत् ॥ २२ ॥
सञ्चोदितो रथः शीघ्रं खरस्य रिपुघातिनः।
शब्देनापूरयामास दिशः स प्रदिशस्तथा ॥ २३ ॥
प्रवृद्धमन्युस्तु खरः खरस्वरो
रिपोर्वधार्थं त्वरितो यथान्तकः।
अचूचुदत् सारथिमुन्नदन् पुन-
र्महाबलो मेघ इवाश्मवर्षवान् ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे खरदूषणयो-
निर्याणं नाम द्वाविंशः सर्गः ॥ २२ ॥

मुद्गरादय आयुधविशेषाः। वज्रैर्वज्राकारैरष्टाखैरायुधैः ॥ १८ ॥
॥ १९ ॥ २० ॥

खरस्य रथोऽपि सेनास्थानात् किञ्चिदनन्तरं सर्वसेनानिर्याणं किञ्चित्कालं प्रतीक्ष्य जगामेत्यर्थः ॥ २१ ॥

मतमाज्ञायाभीष्टं ज्ञात्वा ॥ २२ ॥

सञ्चोदित इत्यादिश्लोकद्वयं कतकसंख्यारीत्या प्रक्षिप्तम् ॥२३॥२४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ।

---

तत्प्रयातं बलं घोरमशिवं शोणितोदकम् ।
अभ्यवर्षन् महाघोरस्तुमुलो गर्दभारुणः ॥ १ ॥
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः ।
समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥
श्यामं रुधिरपर्य्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं प्रतिगृह्य दिवाकरम् ॥ ३ ॥
ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् ।
समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४ ॥

अथ खरप्रस्थाने उत्पातवर्णनम् । शोणितसहितमुदकं प्रयातं प्रस्थितं गर्दभारुणो धूसरः तुमुलस्तुमुलशब्दः अभ्यवर्षत् मेघ इति शेषः ॥ १ ॥

रथयुक्ताः रथे युक्ताः पुष्पचिते पुष्पयुते अनेन पातनिमित्तराहित्यम् ॥ २ ॥

रुधिरो रक्तवर्णः पर्य्यन्तः प्रान्तभागो यस्य । अलातचक्रप्रतिमं तद्वद्वर्तुलं दिवाकरं प्रतिगृह्य सूर्य्यमण्डलेनात्यन्तं सम्बध्य ॥ ३ ॥ ४ ॥

जनस्थानसमीपे च समाक्रम्य खरस्वनाः।
विस्वरान् त्रिविधान् चक्रुः मांसादा मृगपक्षिणः॥ ५॥
व्याजह्रुरभिदीप्तायां दिशि वै भैरवस्वनम्।
अशिवं यातुधानानां शिवा घोरा महास्वनाः॥ ६॥
प्रभिन्नगजसंकाशास्तोयशोणितधारिणः।
आकाशं तदनाकाशं चक्रुर्भीमाम्बुवाहकाः॥ ७॥
बभूव तिमिरं घोरमुद्धतं रोमहर्षणम्।
दिशो वा प्रदिशो वापि सुव्यक्तं न चकाशिरे॥ ८॥
क्षतजार्द्रसवर्णाभा सन्ध्याकालं विना बभौ।
खरस्याभिमुखा नेदुस्तदा घोरा मृगाः खगाः॥ ९॥
कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः।

खरस्वनाः परुषशब्दाः॥ ५॥

अभिदीप्तायां रवियुक्तायां विवस्वदाप्ता भवति प्रदीप्तेति वसन्त राजोक्तेः। शिवाः यातुधानानामशिवमशुभं व्याजह्रुः॥ ६॥

प्रभिन्नगजेति पाठे मत्तगजेत्यर्थः। प्रभिन्नगिरीति पाठे गैरिकादिधातुस्राविण इत्यर्थः। तोयमिव शोणितं धरन्ति अनाकाशमप्रकाशम्॥ ७॥

उद्धतं सान्द्रम्॥ ८॥

क्षतजार्द्रसवर्णाभा रुधिरार्द्रवस्त्रादिसमानवर्णा सन्ध्येति शेष्यम्। कालं विना बभौ मेघेष्विति शेषः॥ ९॥

नित्याशिवकरा युद्धे शिवा घोरनिदर्शना: ॥ १० ॥
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ।
कबन्धाः परिघाभासा दृश्यन्ते भास्करान्तिके ॥ ११ ॥
जग्राह सूर्य्यं स्वर्भानुरपर्वणि महाग्रहः ।
प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ॥ १२ ॥
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः ।
संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ॥ १३ ॥
तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः ।
उद्धूतश्च विना वातं रेणुर्जलधरारुणः ॥ १४ ॥
चीचीकूचीति वाश्यन्तो बभूवुस्तत्र सारिकाः ।
उल्काश्चापि सनिर्घोषा निपेतुर्घोरदर्शनाः ॥ १५ ॥
प्रचचाल मही चापि सशैलवनकानना ।

युद्धे नित्यमशिवकराः अशुभशंसिन्यः शिवा घोरनिदर्शना भयदर्शिकाः । खरबलस्य चाभिमुखं नेदुः पूर्वं दिगभिमुखम् । शिवा शब्द उक्तः इदानीं खरसैन्याभिमुख्येनेति भेदः । परिघाभासः परिघ आयुधविशेषस्तत्सदृशः । कबन्धो धूमकेतुरिति तीर्थः ॥ १० ॥ ११ ॥

शीघ्रं प्रचण्डं यथा भवति तथेत्यर्थः । सम्मुख इति शेषः ॥ १२ ॥

खद्योतसप्रभत्वं निस्तेजस्कत्वेन चाञ्चल्येन च ॥ १३ ॥

विना पुष्पफलैः पुष्पादिरहिताः बभूवुरित्यर्थः । उद्धूत उत्क्षिप्तः जलधरारुणः धूसरः ॥ १४ ॥

खरस्य च रथस्थस्य नर्दमानस्य धीमतः ॥ १६ ॥
प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ।
सास्रामपश्यते दृष्टिः पश्यमानस्य सर्वतः ॥ १७ ॥
ललाटे च रुजो जाता न च मोहान् न्यवर्त्तत ।
तान् समीक्ष्य महोत्पातानुत्थितान् रोमहर्षणान् ॥ १८ ॥
अब्रवीद्राक्षसान् सर्वान् प्रहसन् स खरस्तदा ।
महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान् ॥ १९ ॥
न चिन्तयाम्यहं वीर्य्याद् बलवान् दुर्बलानिव ।
तारा अपि शरैस्तीक्ष्णैः पातयेयं नभस्तलात् ॥ २० ॥
मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् ।
राघवं तं बलोत्सिक्तं भ्रातरञ्चापि लक्ष्मणम् ॥ २१ ॥
अहत्वा सायकैस्तीक्ष्णैर्नोपावर्त्तितुमुत्सहे ।
यन्निमित्तं तु रामस्य लक्ष्मणस्य विपर्य्ययः ॥ २२ ॥
सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः ।

चीचीकूचीति शब्दानुकरणम्। वाश्यन्तः आर्षं नतु शिक्षितं शब्दमित्यर्थः ॥ १५ ॥ १६ ॥

सव्यो वामः स्वरश्चावसज्जत हीनोऽभूदित्यर्थः ॥ १७ ॥

तानुत्पातानुत्थितान् समीक्ष्यापि मोहात् न न्यवर्त्तत युद्धयात्राया इति शेषः ॥ १८ ॥ १९ ॥ २० ॥

बलोत्सिक्तं बलाधिकम् ॥ २१ ॥

न क्वचित् प्राप्तपूर्वो मे संयुगेषु पराजयः ॥ २३ ॥
युष्माकमेतत् प्रत्यक्षं नानृतं कथयाम्यहम् ।
देवराजमपि क्रुद्धो मत्तैरावतगामिनम् ॥ २४ ॥
वज्रहस्तं रणे हन्यां किं पुनस्तौ च मानवौ ।
सा तस्य गर्जितं श्रुत्वा राक्षसानां महाचमूः ॥ २५ ॥
प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता ।
समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ॥ २६ ॥
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ॥ २७ ॥
स्वस्ति गोब्राह्मणेभ्यस्तु लोकानां ये च सम्मताः ।
जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २८ ॥
चक्रहस्तो यथा विष्णुः सर्वानसुरसत्तमान् ।
एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ॥ २९ ॥
जातकौतूहलास्तत्र विमानस्थाश्च देवताः ।
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ ३० ॥

यन्निमित्तं शूर्पणखानिमित्तं विपर्य्ययः क्रूरबुद्धिरूपः ॥ २२ ॥ २३ ॥
एतन्मम पराजयाभावरूपं वस्तु ॥ २४ ॥ २५ ॥ २६ ॥
पुण्यकर्मणः पुण्यकर्माण इत्यर्थ आर्षम् ॥ २७ ॥
ये लोकानां सम्मता गोब्राह्मणव्यतिरिक्तास्तेभ्यश्च स्वस्ति इत्यर्थः ॥
॥ २८ ॥ २९ ॥ ३० ॥

रथेन तु खरो वेगात् सैन्यस्याग्राद्विनिःसृतः * ।
श्येनगामी पृथुग्रामो यज्ञशत्रुर्विहङ्गमः ॥ ३१ ॥
दुर्जयः करवीराक्षः परुषः कालकार्मुकः ।
मेघमाली महामाली सर्पास्यो रुधिराशनः ॥ ३२ ॥
द्वादशैते महावीर्य्याः प्रतस्थुरभितः खरम् ।
महाकपालः स्थूलाक्षः प्रमाथिस्त्रिशिरास्तथा † ॥ ३३ ॥
सा भीमवेगा समराभिकाङ्क्षिणी सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता मालाग्रहाणामिव चन्द्रसूर्य्यौ ॥३४॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे उत्पात-
वर्णनं नाम त्रयोविंशः सर्गः ॥ २३ ॥

सैन्यस्याग्राद्विनिःसृतः पूर्वं सैन्यसम्बन्ध एव तदग्रभागे स्थितः इदानीन्तु सेनां बहुदूरे पृष्ठतस्त्यक्त्वा स्वयमेवाग्रे गत इत्यर्थः । श्येन-गाम्यादयो द्वादशखरामात्याः ॥ ३१ ॥ ३२ ॥ ३३ ॥
सा सेना तौ राजपुत्रौ सहसा तत्क्षणमेवाभ्युपेत्यन्वयः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

* तं दृष्ट्वा निःसृतं भूमौ राक्षसाश्च विनिःसृताः ।
† चत्वार एते सेनाग्र्या दूषणं पृष्ठतोऽन्वयुः ।
इत्यतिरिक्तं पाठान्तराः ।

## चतुर्विंशः सर्गः।

आश्रमं प्रतियाते तु खरे खरपराक्रमे।
तानेवौत्पातिकान् रामः सह भ्रात्रा ददर्श ह॥ १॥
तानुत्पातान् महाघोरान् रामो दृष्ट्वात्यमर्षणः।
प्रजानामहितान् दृष्ट्वा वाक्यं लक्ष्मणमब्रवीत्॥ २॥
इमान् पश्य महाबाहो! सर्वभूतापहारिणः।
समुत्थितान् महोत्पातान् संहर्तुं सर्वराक्षसान्॥ ३॥
अमी रुधिरधारास्तु विसृजन्तः खरस्वनाः।
व्योम्नि मेघा विवर्त्तन्ते * परुषा गर्दभारुणाः॥ ४॥
सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिताः।

औत्पातिकान् उत्पातान् स्वार्थे ठक्॥ १॥

अत्यमर्षणोऽत्यस्वस्थचित्तः प्रजानां प्रकृतत्वाद् राक्षसा एवात्र प्रजाः॥ २॥

सर्वभूतापहारिणस्तत्सूचकान् प्रकृते सर्वराक्षसान् संहर्तुं तत्संहारं सूचयितुम्॥ ३॥ ४॥

* विनर्दन्ते इति वा पाठः।

रुक्मपृष्ठानि चापानि विचेष्टन्ते विचक्षण ! ॥ ५ ॥
यादृशा इह कूजन्ति पक्षिणो वनचारिणः ।
अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६ ॥
संप्रहारस्तु सुमहान् भविष्यति न संशयः ।
अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ ७ ॥
सन्निकर्षे तु नः शूर ! जयं शत्रोः पराजयम् ।
सुप्रभञ्च प्रसन्नञ्च तव वक्त्रं हि लक्ष्यते ॥ ८ ॥
उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण ! ।
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९ ॥

राक्षसानां दुर्निमित्तान्युक्त्वा स्वस्य जयसूचकान्याह,—सधूमा इति। उत्पातवशाद्धूमसंवृताः । मे मम युद्धेऽभिनन्दं आनन्दः येषां संजातस्तादृशाः । अतएव विचेष्टन्ते तूणीरेषु चलन्ति स्वगतानन्दस्य शरेषूपचारः चापानि च विचेष्टन्ते स्वाधिष्ठातृदेवतासान्निध्यात् स्फुरन्त्यानि भवन्ति ॥ ५ ॥

अग्रतः आसन्नदेशकाले । नः भयं जीवितसंशयश्च प्राप्तः । अभयं प्राप्तं चासुराणां जीवितस्य संशयः प्राप्त इत्यर्थ इति तीर्थः ॥ ६ ॥

संप्रहारो रणः एवं भयेष्वपि स्वस्याभयसूचकं निमित्तमाह,—अयमिति । स्फुरमाणः स्फुरन् दक्षिण इति शेषः । तीर्थव्याख्याने जयसूचकान्तरमाहेति व्याख्येयम् ॥ ७ ॥

सन्निकर्षे आसन्नकाले जयमित्यादेराख्यातीत्यनेनान्वयः । तवाप्यङ्गं शुभसूचकमित्याह,—सुप्रभमिति ॥ ८ ॥

रक्षसां नर्दतां घोरः श्रूयते हि महाध्वनिः।
आहतानाञ्च भेरीणां राक्षसैः क्रूरकर्मभिः॥ १०॥
अनागतविधानं तु कर्त्तव्यं शुभमिच्छता।
आपदाशङ्कमानेन पुरुषेण विपश्चिता॥ ११॥
तस्माद् गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः।
गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम्॥ १२॥
प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया।
शापितो मम पादाभ्यां गम्यतां वत्स माचिरम्॥ १३॥
त्वं हि शूरश्च बलवान् हन्या एतान्न संशयः।
स्वयं निहन्तुमिच्छामि सर्वानेव निशाचरान्॥ १४॥
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया।

येषाञ्च वदनं निष्प्रभं भवति तेषामायुःक्षयो भवति। वर्त्तमान-सामीप्ये लट्। नैवमस्माकमिति शेषः। येषामायुःक्षयो भवति तेषां वदनं निष्प्रभमिति व्याख्याने बीजश्चिन्त्यम्॥ ९॥ १०॥

अनागतस्याजिगमिषितस्यानिष्टस्य विधानं प्रतिविधानं परि-हारः॥ ११॥

आश्रमं हित्वा शैलस्य दुर्गामितरैर्गन्तुमशक्यां गुहामाश्रय॥ १२॥

इदं वाक्यं मयोच्यमानं त्वया प्रतिकूलितुं विपरीतं कर्तुं नेच्छामि। भिन्नकर्तृके तुमुनार्थः। उक्तं कुर्वित्यर्थः। माचिरमविलम्बेन॥ १३॥

शरानादाय चापञ्च गुहां दुर्गां समाश्रयत्॥ १५॥
तस्मिन् प्रविष्टे तु गुहां लक्ष्मणे सह सीतया।
हन्तनिर्युक्तमित्युक्त्वा रामः कवचमाविशत्॥ १६॥
स तेनाग्निनिकाशेन कवचेन विभूषितः।
बभूव रामस्तिमिरे महानग्निरिवोत्थितः॥ १७॥
स चापमुद्यम्य महत् शरानादाय वीर्य्यवान्।
संबभूवास्थितस्तत्र ज्यास्वनैः पूरयन् दिशः॥ १८॥
ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः।
समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षया॥ १९॥
ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः।
समेत्य चोचुः सहितास्तेऽन्योऽन्यं पुण्यकर्मणः॥ २०॥
स्वस्ति गोब्राह्मणानाञ्च लोकानाञ्चेति संस्थिताः।

त्वं हीति। अनेनासामर्थ्यान्मां वारयतीति शङ्का निराकृता। स्वयमिति। तथैव शापोद्धारस्य सत्त्वादिति भावः॥ १४॥ १५॥

हन्तेति हर्षे। निर्युक्तं शीघ्रमस्मदुक्तं निर्व्यूढमित्युक्त्वा कवचमाविशत् धृतवान्॥ १६॥

नानारत्नकान्त्याग्निसादृश्यं कवचे॥ १७॥

संबभूवास्थितः सम्यगास्थितो बभूवेत्यर्थः॥ १८॥ १९॥

लोके ब्रह्मर्षिसत्तमाः त्रैलोक्येऽपि ब्रह्मर्षित्वेन प्रसिद्धा इत्यर्थः। पुण्यकर्मणः पुण्यकर्माणः अदीर्घत्वमार्षम्॥ २०॥

जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २१ ॥
चक्रहस्तो यथा युद्धे सर्वानसुरपुङ्गवान् ।
एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ॥ २२ ॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३ ॥
इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः ।
जातकौतूहलास्तस्थुर्विमानस्थाश्च देवताः ॥ २४ ॥
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ।
दृष्ट्वा सर्वाणि भूतानि भयाद्विव्यथिरे तदा ॥ २५ ॥
रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः ।
बभूव रूपं क्रुद्धस्य रुद्रस्येव महात्मनः * ॥ २६ ॥

गोब्राह्मणानामिति षष्ठी चतुर्थ्यर्थे आर्षी तेभ्य इत्यर्थः । लोकानां येऽभिसङ्गता इति पाठे लोकानां लोकपालानां सङ्गताः हविर्होमादि-द्वारोपकारका इत्यर्थः ॥ २१ ॥ २२ ॥

धर्मात्मा अच्छद्मयोधीत्यर्थः ॥ २३ ॥

सगणा विद्याधरादिदशदेवयोनिगणसहिताः । इतीत्यस्य वदन्त इति शेषः ॥ २४ ॥

* पिनाकिनः इति वा पाठः

इति सम्भाष्यमाणे तु देवगन्धर्वचारणैः।
ततो गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजम् ॥ २७ ॥
अनीकं यातुधानानां समन्तात् प्रत्यदृश्यत।
वीरालापान् विसृजतामन्योऽन्यमभिगर्जताम् ॥ २८ ॥
चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः।
विप्रघुष्टस्वनानाञ्च दुन्दुभींश्चाभिनिघ्नताम् ॥ २९ ॥
तेषां सुविपुलः शब्दः पूरयामास तद्वनम्।
तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ॥ ३० ॥
दुद्रुवुर्यत्र निःशब्दं पृष्ठतो नावलोकयन्।
तच्चानीकं महावेगं रामं समनुवर्त्तत ॥ ३१ ॥
धृतनानाप्रहरणं गम्भीरं सागरोपमम्।

तेजसां वैष्णवेन क्षात्रेण। एतेन सहजस्वभावो भगवतो ब्राह्म एव क्षात्रस्तु स्वेच्छया कार्य्याय भगवता स्वीक्रियत इति सूचितम् ॥ २५ ॥

रुद्रस्य रूपमिव रामस्य रूपमप्रतिमम् ॥ २६ ॥

इति वाक्ये सम्भाषमाणे त्वित्यर्थः ॥ २७ ॥

अन्योऽन्यमभिगर्जताम् एवं युद्धं कर्त्तव्यमिति च बोधनार्थमिति शेषः ॥ २८ ॥

जृम्भतां देहममतारांहित्येन युद्धप्रवृत्तये मादकद्रव्यस्वीकारजं जृम्भणाम्। अभीक्ष्णशः पुनः पुनरित्येव पाठः। विप्रघुष्टः अति-प्रायेन कृतःस्वनो येषाम् ॥ २९ ॥ ३०

रामोऽपि चारयन् चक्षुः सर्वतो रणपण्डितः ॥ ३२ ॥
ददर्श खरसैन्यं तद् युद्धायाभिमुखो गतः * ।
वितत्य च धनुर्भीमं तूण्योश्चोद्धृत्य सायकान् ॥ ३३ ॥
क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ।
दुष्प्रेक्ष्यश्चाभवत् क्रुद्धो युगान्ताग्निरिव ज्वलन् ॥ ३४ ॥
तं दृष्ट्वा तेजसाविष्टं प्राव्यथन् † वनदेवताः ।
तस्य रुष्टस्य रूपन्तु रामस्य ददृशे तदा ।
दक्षस्येव क्रतुं हन्तुम् उद्यतस्य पिनाकिनः ॥ ३५ ॥
तत् कार्मुकैराभरणै रथैश्च ‡
सद्वर्मभिश्चाग्निसमानवर्णैः ।

यत्र निःशब्दं शब्दाभावस्तं देशं दुद्रुवुः पृष्ठतो नावलोकयन् । भीतिवशादिति शेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥

सर्वरक्षसां वधार्थं सर्वरक्षोवधद्वारत्वादस्य युद्धस्येति भावः । क्रोधमाहारयत् प्राप्तवान् ॥ ३४ ॥

प्राव्यथन् प्राव्यथन्त ॥ ३५ ॥

* युद्धाभिमुखमुद्यतम् इति वा पाठः

† प्राद्रवन् इति वा पाठः ।

‡ ध्वजैश्च इति वा पाठः ।

बभूव सैन्यं पिशिताशनानां
सूर्य्योदये नीलमिवाभ्रजालम् ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे संग्रामावतरणं नाम चतुर्विंशः सर्गः ॥ २४ ॥

नीलाभ्रजालस्थानीया राक्षसाः । सूर्य्योदयः सूर्य्यकिरणास्तत्स्थानीयः कार्मुकादिसम्बन्धः ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

अवष्टब्धधनुं रामं क्रुद्धं तं रिपुघातिनम् ।
ददर्शाश्रममागम्य खरः सह पुरःसरैः ॥ १ ॥
तं दृष्ट्वा सगुणं चापमुद्यम्य खरनिस्वनः ।
रामस्याभिमुखं सूतं चोद्यतामित्यचोदयत् ॥ २ ॥
स खरस्याज्ञया सूतस्तुरगान् समचोदयत् ।
यत्र रामो महाबाहुरेको धून्वन् धनुः स्थितः ॥ ३ ॥
तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः ।
मुञ्चमाना महानादं सचिवाः पर्य्यवारयन् ॥ ४ ॥
स तेषां यातुधानानां मध्ये रथगतः खरः ।
बभूव मध्ये ताराणां लोहिताङ्ग इवोत्थितः ॥ ५ ॥

उकारान्तोऽपि धनुःशब्दो धनुर्वाचकः । अवष्टब्धमवलम्बितं धनुर्येन तम् ॥ १ ॥

रामस्याभिमुखं रथश्चोद्यतामिति सूतमचोदयत् ॥ २ ॥ ३ ॥

सचिवाः श्येनगाम्यादयः ॥ ४ ॥

लोहिताङ्गो भौमः स इव क्रोधेनास्यापि रक्ताङ्गत्वात् ॥ ५ ॥

ततः शरसहस्रेण राममप्रतिमौजसम्।
अर्दयित्वा महानादं ननाद समरे खरः॥ ६ ॥
ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः।
रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम्॥ ७ ॥
मुद्गरैरायसैः शूलैः प्रासैः खड्गैः परश्वधैः।
राक्षसाः समरे शूरं निजघ्नू रोषतत्पराः॥ ८ ॥
ते बलाहकसंकाशा महाकाया महाबलाः।
अभ्यधावन्त काकुत्स्थं रथैर्वाजिभिरेव च॥ ९ ॥
गजैः पर्वतकूटाभै रामं युद्धे जिघांसवः।
ते रामे शरवर्षाणि व्यसृजन् रक्षसां गणाः॥ १० ॥
शैलेन्द्रमिव धाराभिर्वर्षमाणा महाघनाः।
सर्वैः परिवृतो रामो राक्षसैः क्रूरदर्शनैः॥ ११ ॥
तिथिष्विव महादेवो वृतः पारिषदां गणैः।
तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः॥ १२ ॥
प्रतिजग्राह विशिखैर्नद्योघानिव सागरः।
स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे॥ १३ ॥

अर्दयित्वा अर्दयित्वेव ॥ ६ ॥ ७ ॥ ८ ॥
बलाहका मेघाः ॥ ९ ॥ १० ॥ ११ ॥
तिथिषु प्रदोषतिथिषु पारिषदाम् नुडभाव आर्षः ॥ १२ ॥

राम: प्रदीप्तैर्बहुभिर्वज्रैरिव महाचल: ।
स विद्ध: क्षतजादिग्ध: सर्वगात्रेषु राघव: ॥ १४ ॥
बभूव राम: सन्ध्याभ्रैर्दिवाकर इवावृत: ।
विषेदुर्देवगन्धर्वा: सिद्धाश्च परमर्षय: ॥ १५ ॥
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् ।
ततो रामस्तु संक्रुद्धो मण्डलीकृतकार्मुक: ॥ १६ ॥
ससर्ज निशितान् बाणाञ्छतशोऽथ सहस्रश: ।
दुरावारान् दुर्विषहान् कालपाशोपमान् रणे ॥ १७ ॥
मुमोच लीलया * कङ्कपत्रान् काञ्चनभूषणान् ।
ते शरा: शत्रुसैन्येषु मुक्ता रामेण लीलया ॥ १८ ॥

प्रतिजग्राह तानि शस्त्राणि स्वशरैरवरोध नद्योघाः नदीप्रवाहाः ॥ १३ ॥

वज्रैरिव महाचलः इत्यनेन लेशतोऽपि व्यथाभावः । स विद्धः अनेन द्रष्टृणां किञ्चित् व्रणित्वं सूचयति । आदिग्धः आलिप्तः ॥ १४ ॥

अतएव देवादयो विषेदुः ॥ १५ ॥ १६ ॥

दुरावारान् अशक्यनिवारणान् दुर्विषहान् अतिपीड़ाजनकानिति यावत् ॥ १७ ॥

* राम: कङ्कपत्रानजिह्मगान् इति वा पाठः

आददू रक्षसां प्राणान् पाशाः कालकृता इव।
भित्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ॥ १९ ॥
अन्तरीक्षगता रेजुर्दीप्ताग्निसमतेजसः।
असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ॥ २० ॥
विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः।
तैर्धनूंषि ध्वजाग्राणि चर्माणि कवचानि च ॥ २१ ॥
बाहून् सहस्ताभरणानूरून् करिकरोपमान्।
चिच्छेद रामः समरे शतशोऽथ सहस्रशः। २२ ॥
हयान् काञ्चनसन्नाहान् रथयुक्तान् ससारथीन्।
गजांश्च सगजारोहान् सहयान् सादिनस्तदा ॥ २३ ॥
चिच्छिदुर्बिभिदुश्चैव रामबाणा गुणच्युताः।
पदातीन् समरे हत्वा अनयद्यमसादनम् ॥ २४ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः।

कङ्कपत्रान् तद्युतशरान्। लीलयेति युगपत्सकलप्रपञ्चसंहारस्वरूपस्य एतावन्मात्रं लीलैवेति नाश्चर्य्यायेति भावः ॥ १८ ॥

रुधिराप्लुतास्तत्सिक्ताः ॥ १९ ॥

अतएव दीप्ताग्निसमतेजसः। चापमण्डलात् सन्धानमोचनशैघ्र्यात् मण्डलाकारता चापस्य ॥ २० ॥

चर्माणि फलकान् ॥ २१ ॥

सहस्ताभरणान् साङ्गदान् ॥ २२ ॥ २३ ॥

भीममार्त्तस्वरं चक्रुश्छिद्यमाना निशाचराः॥ २५॥
तत्सैन्यं विविधै*र्बाणैरर्दितं मर्मभेदिभिः।
न रामेण सुखं लेभे शुष्कं वनमिवाग्निना॥ २६॥
केचिद्भीमबलाः शूराः प्रासान् शूलान् परश्वधान्।
† चिक्षिपुः परमक्रुद्धा रामाय रजनीचराः॥ २७॥
तेषां बाणैर्महाबाहुः शस्त्राण्यावार्य्य वीर्य्यवान्।
जहार समरे प्राणांश्चिच्छेद च शिरोधरान्॥ २८॥
ते छिन्नशिरसः पेतुश्छिन्नचर्मशरासनाः।

छेदभेदौ द्वैधीभावविदारणरूपौ। पदातीन् हत्वा यमगृहमप्रापय-दित्यन्वयः॥ २४॥

नालीकाः मुखमात्रायःसंयुक्ताः नाराचाः सर्वत आयसाः विकर्णिनः अग्राङ्कुशाः उद्धारे प्राणहराः॥ २५॥ २६॥ २७॥

आवार्य्य वारितानि कृत्वा॥ २८॥

सुपर्णवातेन गरुड़पक्षवातेनामृतहरणयुद्धे विच्छिन्नाः भग्नाः पादपा नन्दनस्थाः कल्पवृक्षादयो यथा तद्वत्। समग्रालङ्कारयुतशरीरत्वाद्रक्ष-स्तनूनां कल्पवृक्षादिसाम्यमिति कतकः॥ २९॥

---

* निशितैः इति वा पाठः।

† रामस्याभिमुखं स्थित्वा चिक्षिपुः परमायुधान्।
इति वा पाठः।

सुपर्णवातविक्षिप्ता जगत्यां पादपा यथा ॥ २९ ॥
अवशिष्टाश्च ये तत्र विषण्णास्ते निशाचराः।
खरमेवाभ्यधावन्त शरणार्थं शराहताः ॥ ३० ॥
तान् सर्वान् धनुरादाय समाश्वास्य च दूषणः।
अभ्यधावत् सुसंक्रुद्धः क्रुद्धं क्रुद्ध इवान्तकः ॥ ३१ ॥
निवृत्तास्तु पुनः सर्वे दूषणाश्रयनिर्भयाः * ।
राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३२ ॥
शूलमुद्गरहस्ताश्च पाशहस्ता महाबलाः।
सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥ ३३ ॥
द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः।
तद् बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ ३४ ॥
रामस्यास्य महाघोरं पुनस्तेषाञ्च रक्षसाम्।
ते समन्तादभिक्रुद्धा राघवं पुनरर्दयन् † ॥ ३५ ॥

अवशिष्टा हतावशिष्टाः ॥ ३० ॥
तान् सर्वान् शरणार्थिनः क्रुद्धं रामं क्रुद्धोऽन्तक इवाभ्यधावत् ॥ ३१ ॥
दूषणाश्रयेण दूषणाश्रयबलेन निर्भयाः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

---

* दूषणाश्रयसंश्रिताः इति वा पाठः।
† पुनरभ्ययुः इति वा पाठः।

ततः सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः ।
* राक्षसैः सर्वतः प्राप्तैः शरवर्षाभिरावृतः ॥ ३६ ॥
स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् ।
संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३७ ॥
ततः शरसहस्राणि निर्ययुश्चापमण्डलात् ।
सर्वा दश दिशो बाणैरापूर्य्यन्त समागतैः ॥ ३८ ॥
नाददानं शरान् घोरान् न मुञ्चन्तं शरोत्तमान् ।
विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥ ३९ ॥
शरान्धकारमाकाशमावृणोत् सदिवाकरम् ।

ततः सर्वा दिशः प्रदिशश्चावृता दृष्ट्वा स रामः भैरवं नादं कृत्वा सर्वतः प्राप्तैः राक्षसैः शरवर्षाभिः शरवृष्टिभिरावृतः कालोचितं परमभास्वरं गान्धर्वमस्त्रं राक्षसेषु राक्षसविषये समयोजयत् धनुषीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥

नाददानमिति । अतिशैघ्र्यवशात् शरग्रहणमोचने न पश्यन्ति किन्तु विकर्षमाणमेव धनुः पश्यन्ति ॥ ३९ ॥

दिवाकरसहितमाकाशं कर्म्म शरान्धकारं कर्तृ आवृणोत् । अन्धकारोऽस्त्रियाम् । प्रक्षिपन्निव भूयो भूयः प्रक्षिपन्नेवेत्यर्थः इव शब्द एवार्थे ॥ ४० ॥

* राक्षसैरुद्यतप्रासैः शरवर्षाणि वर्षिभिः इति वा पाठः

बभूवावस्थितो रामः प्रक्षिपन्निव तान्छरान् ॥ ४० ॥
युगपत् पतमानैश्च युगपत् प्रहितैः शरैः ।
युगपत् पतितैश्चैव विकीर्णा वसुधाभवत् ॥ ४१ ॥
निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः ।
तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥ ४२ ॥
सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा ।
ऊरुभिर्बाहुभि*श्छिन्नैर्नानारूपैर्विभूषणैः ॥ ४३ ॥
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः ।
चामरव्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि ॥ ४४ ॥
रामेण बाणाभिहतैर्विच्छिन्नैः शूलपट्टिशैः ।
विच्छिन्नैः समरे भूमिर्विस्तीर्णाभूद्भयङ्करा ॥ ४५ ॥

विकीर्णा छन्नाच्छादना । विस्तीर्णेति पाठेऽप्ययमेवार्थः ॥ ४१ ॥

निहताः सद्यो हताः पतिताः पातानन्तरं मृताः क्षीणाः कण्ठगतप्राणाः । छिन्नभिन्नौ व्याख्यातौ ॥ ४२ ॥

विभूषणैरुपलक्षितराक्षसैरिति शेषः ॥ ४३ ॥ ४४ ॥

विच्छिन्नैर्विशेषतश्छिन्नैः चामरादिभिर्विशेषतश्छिन्नैः शूलपट्टिशैश्चेत्यर्थः ॥ ४५ ॥

---

* जानुभिः इति वा पाठः ।

तान् दृष्ट्वा निहतान् सर्वे राक्षसाः परमातुराः ।
न तत्र चलितुं शक्ता रामं परपुरञ्जयम् * ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे संग्राम-
वर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥

रामं चलितुं रामं प्रतिसंमुखं गन्तुम् ॥ ४६ ॥

---

* बलार्वशेषन्तु निरस्तमाहवे
खराधिकं राक्षसदुर्बलं बलम् ।
जघान रामः स्थिरधर्मपौरुषो
धनुर्बलादप्रतिवारणैः शरैः ॥ ४७ ॥

इत्यतिरिक्तं पाश्चात्याः ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

दूषणस्तु स्वकं सैन्यं हन्यमानं विलोक्य च ।
सन्दिदेश महाबाहुर्भीमवेगान् दुरासदान् ॥ १ ॥
राक्षसान् पञ्चसाहस्रान् समरेष्वनिवर्त्तिनः ।
ते शूलैः पट्टिशैः खड्गैः शिलावर्षैर्द्रुमैरपि ॥ २ ॥
शरवर्षैरविच्छिन्नं ववर्षुस्तं समन्ततः ।
तद्द्रुमाणां शिलानाञ्च वर्षं प्राणहरं महत् ॥ ३ ॥
प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः ।
प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ॥ ४ ॥
रामः क्रोधं परं लेभे वधार्थं सर्वरक्षसाम् ।
ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ॥ ५ ॥
शरैरभ्यकिरत् सैन्यं * सर्वतः सह दूषणम् ।
ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ॥ ६ ॥

दूषणस्त्विति ॥ १ ॥
पञ्चसाहस्रान् स्वसैन्यरूपान् ॥ २ ॥ ३ ॥

---

* शरैरभ्यहनत्तूर्णम् इति वा पाठः ।

शरैरशनिकल्पैस्तं राघवं समवारयत् * ।
ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ ७ ॥
चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् ।
हत्वा चाश्वान् शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः ॥ ८ ॥
शिरो जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि ।
सच्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ९ ॥
जग्राह गिरिशृङ्गाभं परिघं लोमहर्षणम् ।
वेष्टितं काञ्चनैः पट्टैर्देवसैन्याभिमर्दनम् ॥ १० ॥
आयसैः शंकुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् ।
वज्राशनिसमस्पर्शं परगोपुरदारणम् ॥ ११ ॥
तं महोरगसंकाशं प्रगृह्य परिघं रणे ।
दूषणोऽभ्यपतद्रामं क्रूरकर्मा निशाचरः ॥ १२ ॥
तस्याभिपतमानस्य दूषणस्य स राघवः ।

प्रतिजग्राह सरोध । निमीलितः वर्षधारया निमीलिताक्षः ॥ ४ ॥ ॥ ५ ॥ ६ ॥

क्षुरेण क्षुरधारेण शरेण ॥ ७ ॥ ८ ॥

तद्रक्षः कर्म स्थधने रामः कर्ता ॥ ९ ॥ १० ॥

परेषां शत्रूणां वसयोक्षितं सिक्तं शत्रूणां गाव इन्द्रियाणि तेषां

* समवाकिरत् इति वा पाठः ।

द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १३ ॥
भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि।
परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ १४ ॥
स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः।
विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ १५ ॥
दृष्ट्वा तं पतितं भूमौ दूषणं निहतं रणे।
साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १६ ॥
एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः।
संहत्याभ्यद्रवन् रामं मृत्युपाशावपाशिताः ॥ १७ ॥
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः।
महाकपालो विपुलं शूलमुद्यम्य राक्षसः ॥ १८ ॥
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम्।
दृष्ट्वैवापततस्तांस्तु राघवः सायकैः शितैः ॥ १९ ॥
तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव।

पुरं शरीरं तस्य दारणं विदारकम्। यद्वा तेषां पुरद्वारविदारकम् ॥
॥ ११ ॥ १२ ॥ १३ ॥

हस्तच्छेदानन्तरं भ्रष्टः घूर्णनेन स्थानाद् भ्रष्टः तथा छिन्नहस्तस्य परिघः पपात ॥ १४ ॥

विकीर्णाभ्यां विच्छिन्नाभ्यां भुजाभ्यामुपलक्षितो दूषणश्च पपात विगतासुरिति शेषः। विषाणाभ्यां दन्ताग्राम् ॥ १५ ॥ १६ ॥

महाकपालस्य शिरश्चिच्छेद रघुनन्दनः ॥ २० ॥
असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ।
स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः ॥ २१ ॥
स पपात हतो भूमौ विटपीव महाद्रुमः ।
दूषणस्यानुगान् पञ्चसहस्रान् कुपितः क्षणात् ॥ २२ ॥
हत्वा तु पञ्चसाहस्रानयद् यमसादनम् ।
दूषणं निहतं श्रुत्वा * तस्य चैव पदानुगान् ॥ २३ ॥
व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान् महाबलान् ।
अयं विनिहतः संख्ये * दूषणः सपदानुगः ॥ २४ ॥
महत्या सेनया सार्धं युध्वा रामं कुमानुषम् ।
शस्त्रैर्नानाविधाकारैर्हनध्वं सर्वराक्षसाः ॥ २५ ॥
एवमुक्त्वा खरः क्रुद्धो राममेवाभिदुद्रुवे ।
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः ॥ २६ ॥

संहृत्य मिलित्वा मृत्युपाशेनावपाशिताः बद्धाः ॥ १७ ॥ १८ ॥
॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

पञ्चसाहस्रान् पञ्चसाहस्रैरित्यनेन भगवतोऽमोघेषुत्वं सूचितम् ॥
॥ २३ ॥ २४ ॥

* दृष्ट्वा इति वा पाठः ।

* शेते इति वा पाठः ।

दूर्जयः करवीराक्षः परुषः कालकार्मुकः ।
हेममाली महामाली सर्पास्यो रुधिराशनः ॥ २७ ॥
द्वादशैते महावीर्य्या बलाध्यक्षाः ससैनिकाः ।
राममेवाभ्यधावन्त विसृजन्तः शरोत्तमान् ॥ २८ ॥
ततः पावकसंकाशैर्हेमवज्रविभूषितैः ।
जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ २९ ॥
ते रुक्मपुंखा विशिखाः सधूमा इव पावकाः ।
निजघ्नुस्तानि रक्षांसि वज्रा इव महासुरान् ॥ ३० ॥
रक्षसां तु शतं रामः शतेनैकेन कर्णिना ।
सहस्रन्तु सहस्रेण जघान रणमूर्धनि ॥ ३१ ॥
तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः ।
निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥ ३२ ॥
तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः ।
विस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥ ३३ ॥
तत्क्षणे तु महाघोरं वनं निहतराक्षसम् ।
बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ ३४ ॥

हनध्वमित्यार्षम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

शतं एकेन शतेन तत्संख्याकेन कर्णिना बाणविशेषेण । एवं सहस्रं सहस्रेण ॥ ३१ ॥

शोणितादिग्धाः शोणितलिप्ताः ॥ ३२ ॥

चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्।
हतान्येकेन रामेण मानुषेण पदातिना ॥ ३५ ॥
तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः।
राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ ३६ ॥
शेषा हता महावीर्य्या राक्षसा रणमूर्धनि।
घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते ॥ ३७ ॥

ततस्तु तद्भीमबलं महाहवे
समीक्ष्य रामेण हतं बलीयसा।
रथेन रामं महता खरस्ततः
समाससादेन्द्र इवोद्यताशनिः ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे दूषण-
वधो नाम षड्विंशः सर्गः ॥ २६ ॥

विस्तीर्णा विशेषेण स्कन्ना महावेदिः अश्वमेधादिवेदिः ॥ ३३ ॥३४॥
मानुषेण मानुषवेषेणापि ॥ ३५ ॥
त्रिशिराश्चैवेति ससमूलबलेन सहेति शेषः ॥ ३६ ॥ ३७ ॥
उद्यताशनिरुद्यतवज्रः ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

# सप्तविंशः सर्गः ।

खरन्तु रामाभिमुखं प्रयान्तं वाहिनीपतिः ।
राक्षसस्त्रिशिरा नाम सन्निपत्येदमब्रवीत् ॥ १ ॥
मां नियोजय विक्रान्तं * त्वं निवर्त्तस्व साहसात् ।
पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २ ॥
प्रतिजानामि ते सत्यमायुधञ्चाहमालभे ।
यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम् ॥ ३ ॥
अहं वास्य रणे मृत्युरेष वा समरे मम ।
विनिवर्त्य रणोत्साहं मुहूर्त्तं प्राश्निको भव ॥ ४ ॥

खरमिति । सन्निपत्य त्वरया तत्समीपमागम्य ॥ १ ॥
विनिपातितं मयेति शेषः ॥ २ ॥
आलभे स्पृशामि यथा वधिष्यामि तथा प्रयतिष्ये इति शेषः । सर्वरक्षसां वधार्हं सर्वरक्षसां वध्यमित्यर्थः ॥ ३ ॥
अहं वा समरे इति पाठे मृत्युरित्यस्यास्ये इति शेषः । रणोत्साहादिति पाठे ततो मनो निवर्त्येत्यर्थः । प्राश्निको मध्यस्थः उभययुद्धसाक्षीत्यर्थः ॥ ४ ॥

* संग्रामे इति वा पाठः

प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि।
मयि वा निहते रामं संयुगाय प्रयास्यसि॥ ५॥
खरस्त्रिशिरसा तेन मृत्युलोभात् प्रसादितः।
गच्छ युद्धेत्यभिज्ञातो राघवाभिमुखो ययौ॥ ६॥
त्रिशिरास्तु रथेनैव वाजियुक्तेन भास्वता।
अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः॥ ७॥
शरधारासमूहान् स महामेघ इवोत्सृजन्।
व्यसृजत् सदृशं * नादं जलार्द्रस्येव दुन्दुभेः॥ ८॥
आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः।
धनुषा प्रतिजग्राह विधुन्वन् सायकान् शितान्॥ ९॥
स संप्रहारस्तुमुलो रामत्रिशिरसोस्तदा † ।
सम्बभूवातिबलिनोः सिंहकुञ्जरयोरिव॥ १०॥
ततस्त्रिशिरसा बाणैर्ललाटे ताड़ितस्त्रिभिः।
अमर्षी कुपितो रामः संरब्ध इदमब्रवीत्॥ ११॥

संयुगाय संयुगं कर्तुम्॥ ५॥

मृत्युलोभात् मृत्युकृतयुद्धलोभात् मृत्युसमये रक्षःप्रकृतिविपर्ययात् तस्य भगवत्तत्त्वं ज्ञात्वा तद्धस्तमृत्युलोभादित्यर्थस्य। युद्ध युद्धं कुरुष्व। अनुज्ञातः खरेणेति शेषः॥ ६॥ ७॥

---

* भैरवं इति वा पाठः।

† महान् इति वा पाठः।

अहो विक्रमशूरस्य राक्षसस्येदृशं बलम्।
पुष्पैरिव शरैर्योऽहं ललाटेऽस्मि परिक्षतः ॥ १२ ॥
ममापि प्रतिगृह्णीष्व शरांश्चापगुणाच्च्युतान्।
एवमुक्तस्तु संरब्धः शरानाशीविषोपमान् ॥ १३ ॥
त्रिशिरोवक्षसि क्रुद्धो निजघान चतुर्दश।
चतुर्भिस्तुरगानस्य शरैः सन्नतपर्वभिः ॥ १४ ॥
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः।
अष्टभिः सायकैः सूतं रथोपस्थान्न्यपातयत् ॥ १५ ॥
रामश्चिच्छेद बाणेन ध्वजञ्चास्य समुच्छ्रितम्।
ततो हतरथात्तस्मादुत्पतन्तं निशाचरम् ॥ १६ ॥
चिच्छेद रामस्तं बाणैर्हृदयेनाभवज्जड़ः।
सायकैश्चाप्रमेयात्मा सामर्षात्तस्य रक्षसः ॥ १७ ॥
शिरांस्यपातयत्त्रीणि वेगवद्भिस्त्रिभिः शरैः।

जलार्द्रस्येति। अनेन नादवैपरीत्येन मृत्युसान्निध्यं सूचितम् ॥ ८ ॥ ॥ ६ ॥ १० ॥ ११ ॥

अहो इत्यादिर्व्यंगोक्तिः। पुष्पैरिव परिक्षत इत्यनेन त्वगपि न विद्धेत्याशयः ॥ १२ ॥ १३ ॥

तुरगान् वेगवतोऽश्वानित्यर्थः ॥ १४ ॥ १५ ॥

हतरथात् हतहयसारथिकाद्रथात् ॥ १६ ॥

जड़ः आयुधपरिग्रह इति शेषः ॥ १७ ॥ १८ ॥

सधूम*शोणितोद्गारी रामबाणाभिपीडितः ॥ १८ ॥
न्यपतत् पतितैः पूर्वं समरस्थो निशाचरः ।
हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः ॥ १९ ॥
द्रवन्ति स्म न तिष्ठन्ति व्याधत्रस्ता मृगा इव ।
तान् खरो द्रवतो दृष्ट्वा निवर्त्य रुषितस्त्वरन् ।
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे त्रिशिरसः संहारवर्णनं नाम सप्तविंशः सर्गः ॥ २७ ॥

पूर्वं पतितैः शिरोभिरुपलक्षितः पश्चान्न्यपतत् । चतुर्दशसहस्राणि मम चित्तानुवर्त्तिनामिति सेनोद्योगे खरोक्तेश्चतुर्दशसहस्राणि हतानि खरत्रिशिरसावेवावशिष्टौ इति पूर्वसर्गान्ते उक्तेर्हतशेषाश्चिवत्यति अत्रत्योक्तेश्चतुर्दशसहस्रं यूथपा अत्रेति ज्ञायते । हतशेषा इति तु खरीयमूलबलाभिप्रायं बोध्यम् ॥ १९ ॥ २० ॥

---

* स भूमौ इति वा पाठः ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः।

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह।
खरस्याप्यभवत्त्रासो दृष्ट्वा रामस्य विक्रमम्॥ १॥
स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलः।
हतमेकेन रामेण दूषणस्त्रिशिरा अपि॥ २॥
तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः।
आससाद खरो रामं नमुचिर्वासवं यथा॥ ३॥
विकृष्य बलवच्चापं नाराचान् रक्तभोजनान्।
खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव॥ ४॥
ज्यां विधुन्वन् सुबहुशः शिक्षयास्त्राणि दर्शयन्।
चचार समरे मार्गान् शरै रथगतः खरः॥ ५॥
स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः।

निहतमिति॥ १॥
रक्षसामिदं राक्षसं सैन्यं हतं दृष्ट्वेत्यन्वयः॥ २॥
हतभूयिष्ठम् अल्पावशेषम्॥ ३॥ ४॥
शिक्षया धनुर्विद्याभ्यासेन मार्गांश्चरसन्धानक्षेपणादिप्रकारभेदान्

पूरयामास तं दृष्ट्वा रामोऽपि सुमहद्धनुः ॥ ६ ॥
स सायकैर्दुर्विषहैर्विस्फुलिङ्गैरिवाग्निभिः ।
नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७ ॥
तद् बभूव शितैर्बाणैः खररामविसर्जितैः ।
पर्य्याकाशमनाकाशं सर्वतः शरसंकुलम् ॥ ८ ॥
शरजालावृतः सूर्य्यो न तदा स्म प्रकाशते ।
अन्योऽन्यवधसंरम्भादुभयोः संप्रयुध्यतोः ॥ ९ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
आजघान रणे रामं तोत्रैरिव महाद्विपम् ॥ १० ॥
तं रथस्थं धनुष्पाणिं राक्षसं पर्य्यवस्थितम् ।
ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११ ॥
हन्तारं सर्वसैन्यस्य पौरुषे पर्य्यवस्थितम् ।
परिश्रान्तं महासत्वं मेने रामं खरस्तदा ॥ १२ ॥
तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् ।
दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३ ॥

दर्शयन् रथस्थः खरः समरे चचार अनेकविधरथसञ्चरणैः ॥५॥६॥
स रामः नभः आकाशमविवरं नीरन्ध्रं चकार ॥ ७ ॥
पर्य्याकाशं परितो विद्यमानमाकाशमनाकाशं बभूव ॥८॥९॥१०॥११॥
सर्वसैन्यस्य हन्तारं रामं खरः परिश्रान्तं मेने अनेनायं प्रहाराव-

ततः सूर्य्यनिकाशेन रथेन महता खरः।
आससादाथ तं रामं पतङ्ग इव पावकम्॥ १४॥
ततोऽस्य सशरञ्चापं मुष्टिदेशे महात्मनः।
खरश्चिच्छेद रामस्य दर्शयन् हस्तलाघवम्॥ १५॥
स पुनस्त्वपरान् सप्त शरानादाय मर्मणि।
निजघान रणे क्रुद्धः शक्राशनिसमप्रभान्॥ १६॥
ततः शरसहस्रेण राममप्रतिमौजसम्।
अर्दयित्वा महानादं ननाद समरे खरः॥ १७॥
ततस्तत् प्रहतं बाणैः खरमुक्तैः सुपर्वभिः।
पपात कवचं भूमौ रामस्यादित्यवर्चसम्॥ १८॥
स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघवः।
रराज समरे रामो विधूमोऽग्निरिव ज्वलन्॥ १९॥
ततो गम्भीरनिर्ह्रादं रामः शत्रुनिवर्हणः।
चकारान्ताय स रिपोः सज्जमन्यन्महद्धनुः॥ २०॥

सर इति खरबोधः सूचितः अतएवानुपदं तेन रामधनुषश्छेदः॥ १२॥
॥ १३॥ १४॥

मुष्टिदेशे धनुर्ग्रहणप्रदेशोपरिदेशे॥ १५॥

स खरमर्म्मणि कवचबन्धसन्धिषु॥ १६॥ १७॥

प्रहृतं कवचं पपात॥ १८॥

सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा ।
वरं तद्धनुरुद्यम्य खरं समभिधावत ॥ २१ ॥
ततः कनकपुंखैस्तु शरैः सन्नतपर्वभिः ।
चिच्छेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२ ॥
स दर्शनीयो बहुधा विच्छिन्नः काञ्चनो ध्वजः ।
जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥ २३ ॥
तं चतुर्भिः खरः क्रुद्धो रामं गात्रेषु मार्गणैः ।
विव्याध हृदि मर्मज्ञो मातङ्गमिव तोमरैः ॥ २४ ॥
स रामो बहुभिर्बाणैः खरकार्मुकनिःसृतैः ।
विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशम् ॥ २५ ॥
स धनुर्धन्विनां श्रेष्ठः संगृह्य परमाहवे ।
मुमोच परमेष्वासः षट् शरानभिलक्षितान् ॥ २६ ॥
शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्पयत् ।
त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ॥ २७ ॥

शरैरर्पितः संक्षतः क्षतः ॥ १९ ॥ २० ॥
महर्षिणा अगस्त्येन अतिसृष्टं दत्तं वरं श्रेष्ठम् ॥ २१ ॥ २२ ॥
देवतानामाज्ञया सूर्य्य इवेति कविकल्पितोपमा निर्बोपमेयम् ॥
॥ २३ ॥ २४ ॥ २५ ॥
अभिलक्षितानभिलक्षितविषयान् ॥ २६ ॥

ततः पश्चान्महातेजा नाराचान् भास्करोपमान्।
जघान राक्षसं क्रुद्धस्त्रयोदश शिलाशितान्॥ २८ ॥
रथस्य युगमेकेन चतुर्भिः शबलान् हयान्।
षष्ठेन च शिरः संख्ये चिच्छेद खरसारथेः॥ २९ ॥
त्रिभिस्त्रिवेणून् बलवान् द्वाभ्यामक्षं महाबलः।
द्वादशेन तु बाणेन खरस्य सकरं * धनुः॥ ३० ॥
छित्वा वज्रनिकाशेन राघवः प्रहसन्निव।
त्रयोदशेनेन्द्रसमो बिभेद समरे खरम्॥ ३१ ॥
प्रभग्नधन्वा विरथो हताश्वो हतसारथिः।
गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा॥ ३२ ॥

तत् कर्म रामस्य महारथस्य
समेत्य देवाश्च महर्षयश्च।

तानेव विषयानाह। शिरस्येकेनेत्यादि॥ २७॥
भास्करोपमानित्यस्य गृहीत्वेति शेषः॥ २८॥
उपात्तत्रयोदशानां विनियोगमाह। रथस्येत्यादि॥ २९॥
त्रिवेणुर्नाम रथमुखस्थो युगाधारदण्डः॥ ३०॥
प्रहसन्निव लीलयैव बिभेद खरं हृदीति शेषमाह कतकः॥३१॥३२॥

---

* सशरम् इति वा पाठः।

अपूजयन् प्राञ्जलयः प्रहृष्टा-
　　स्तदा विमानाग्रगताः समेताः ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यककाण्डे संग्राम-
वर्णनं नाम अष्टाविंशः सर्गः ॥ २८ ॥

महारथस्य पूज्यस्य तत् कर्म दृष्ट्वेति शेषः । अपूजयन्नमस्कारस्तु-
त्यादिभिस्तमतोषयन्नित्यर्थः ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यककाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः।

खरन्तु विरथं रामो गदापाणिमवस्थितम्।
मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत्॥ १॥
गजाश्वरथसम्बाधे बले महति तिष्ठता।
कृतं ते दारुणं कर्म सर्वलोकजुगुप्सितम्॥ २॥
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत्।
त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति॥ ३॥
कर्म लोकविरुद्धन्तु कुर्वाणं क्षणदाचरम्।
तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम्॥ ४॥

मृदुपूर्वं न्यायमवलम्ब्य मृदूक्तिपूर्वं परुषं परुषार्थकम्॥ १॥

त्वत्कृतान्यायेनायं तव नाश इत्याह,—गजेत्यादि। बले तिष्ठता बलविषयस्वामित्वेन तिष्ठता ईदृशेन यद्दारुणं कर्म कृतं भवति तत्सर्वं लोकनिन्द्यं भवति॥ २॥

एवंविधकर्मकर्तुर्नह सुखमित्याह,—उद्वेजनीय इति उद्वेजक इत्यर्थः नृशंसो घातुकः क्रूरः एवं गुणक ईश्वरोऽपि न तिष्ठति न चिरं तिष्ठति॥ ३॥

लोभात् पापानि कुर्वाणः कामाद्वा यो न बुध्यते ।
भ्रष्टः *पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५ ॥
वसतो दण्डकारण्ये तापसान् धर्मचारिणः ।
किन्नु हत्वा महाभागान् फलं प्राप्स्यसि राक्षस ! ॥ ६ ॥
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ।
ऐश्वर्य्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः । ७ ॥
अवश्यं लभते कर्त्ता फलं पापस्य कर्मणः ।

तदेवाह—कर्मेत्यादि । सर्वजनो हन्ति अकृतापकारोऽपि हन्ति स सर्ववध्य इति यावत् ॥ ४ ॥

अप्राप्तप्राप्तीच्छा कामः । प्राप्ताधिकेच्छा लोभः । तस्य पापस्यान्तं स्वनाशरूपं परिपाकं पश्यति पापफलमनुभवतीत्यर्थः । करका वर्षा-पलास्तानत्ति करकात् सा ब्राह्मणी रक्तपुच्छिकेव रक्तपुच्छिकायाः करका विषं तन्निगरणमात्रेण तन्मृत्युरिति प्रसिद्धिः सा यथा स्वानर्थ-मपश्यन्ती तद्भुक्तभोजनोत्तरं तन्नाशं लोकः पश्यति एवं यः कर्म-करणकाले नाशकमिदमिति न बुध्यते तस्य तत्कर्मप्राप्तमन्तं नाशं लोको हृष्टः सन् पश्यतीत्यर्थ इति कतकः ॥ ५ ॥

ततः किं तत्राह,—वसत इति । किं नु फलमग्रे प्राप्स्यसि तन्न विद्म इति शेषः ॥ ६ ॥

इदन्तु प्रत्यक्षमित्याह,—नेति । पापकर्माणः पूर्वपुण्यैरैश्वर्य्यं प्राप्यापि न चिरं तिष्ठन्ति ॥ ७ ॥

---

* भ्रष्ट इति वा पाठः । आयुषो भ्रष्ट इत्यर्थः ।

घोरं पर्य्यागते काले द्रुमः पुष्पमिवार्त्तवत् ॥ ८ ॥
न चिरात् प्राप्यते लोके पापानां कर्मणां फलम् ।
सविषाणामिवान्नानां भुक्तानां च्णदाचर ! ॥ ९ ॥
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ।
अहमासादितो राजा प्राणान् हन्तुं निशाचर ! ॥ १० ॥
अद्य भित्वा मया मुक्ताः शराः काञ्चनभूषणाः ।
विदार्य्यातिपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ ११ ॥
ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः ।
तानद्य निहतः संख्ये ससैन्योऽनुगमिष्यसि ॥ १२ ॥
अद्य त्वां निहतं बाणैः पश्यन्तु परमर्षयः ।

काले पापानुभवकाले घोरं दुःखरूपफलम् ॥ ८ ॥ ९ ॥

घोरं कर्मणः फलं भवतीति शेषः । अतो हेतोरहं राजा दुष्टनिग्रहाधिकारी हे निशाचर रक्षसां प्राणान् हन्तुं आसादितो ऋषिभिरिति शेषः । त्वयेति वा । राज्ञेति पाठे राज्ञा दशरथेनासादितो नियुक्त इत्यर्थ इति तीर्थः ॥ १० ॥

अद्य मया मुक्ता बाणाः त्वद्वपुर्भित्वा भूमिं विदार्य्यातिपतिष्यन्ति भुवमतिक्रम्य पतिष्यन्ति । पातालं गमिष्यन्ति इति यावत् ॥ ११ ॥

अत्र ऋष्यनुगमनं प्राणनाशमात्रेण अतएव निरयस्थमिति वक्ष्यति ॥ १२ ॥

निरयस्थमिति । ननु भगवता हतस्य मृतिसमये भगवद्दर्शनवतः

निरयस्थं विमानस्था ये त्वया निहताः पुरा ॥ १३ ॥
प्रहरस्व यथाकामं कुरु यत्नं कुलाधम ! ।
अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥ १४ ॥
एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः ।
प्रत्युवाच ततो रामं प्रहसन् क्रोधमूर्च्छितः ॥ १५ ॥
प्राकृतान् राक्षसान् हत्वा युद्धे दशरथात्मज ! ।
आत्मना कथमात्मानं अप्रशस्यं प्रशंससि ॥ १६ ॥
विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभाः ।
कथयन्ति न ते किञ्चित् तेजसा चातिगर्विताः ॥ १७ ॥
प्राकृतास्त्वकृतात्मानो लोके क्षत्रियपांसनाः ।
निरर्थकं विकत्थन्ते यथा राम ! विकत्थसे ॥ १८ ॥
कुलं व्यपदिशन् वीरः समरे कोऽभिधास्यति ।
मृत्युकाले तु संप्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९ ॥

कथं निरयस्थत्वमिति चेन्न अत्युग्रस्य ब्रह्मवधकर्मणः फलस्यावश्यं भोक्तव्यत्वेनादौ भगवदिच्छयैव निरयभोगपूर्वमुत्तमपदप्राप्तेः सत्वेनादोषात् ॥ १३ ॥

कुलाधम कुलेनाधम ॥ १४ ॥ १५ ॥ १६ ॥

गर्विता अपि न कथयन्तीत्यन्वयः ॥ १७ ॥

अकृतात्मानः कल्मषचित्ताः ॥ १८ ॥

कलुषं व्यपदिशन् कुलीनत्वं प्रकटयन् मृत्युकाले तत्तुल्ययुद्धकाले

सर्वथा तु लघुत्वं ते कत्थनेन विदर्शितम्।
सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना ॥ २० ॥
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम्।
धराधरमिवाकम्प्रं पर्वतं धातुभिश्चितम् ॥ २१ ॥
पर्य्याप्तोऽहं गदापाणिर्हन्तुं प्राणान् रणे तव।
त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२ ॥

संप्राप्ते अप्रस्तवे अप्रस्तावे घञभाव आर्षः। स्वस्तवरूपं वचनं कोऽभिधास्यति न कोऽपीत्यर्थः। अहमासादितो राजेति रामोक्तेरिदमुक्तवान् ॥ १९ ॥

कत्थनेन प्राक्कृतेन ते त्वया सर्वथैवात्मनो लघुत्वं दर्शितम्। यथा सुवर्णप्रतिरूपेण स्वर्णतुल्यरूपेण पित्तलेन कुशाग्निना स्वर्णादिशोधनाग्निना तप्तेन यथा स्वस्य कृष्णवर्णत्वरूपं लाघवं दर्शितं भवति तद्वत्तापात् पूर्वं हि तत्र स्वर्णताबुद्धिः सा तापे यथा नश्यति तथा त्वया स्वस्मिन् स्थिता प्राक् शूरत्वबुद्धिः कत्थनेनापहृतेत्यर्थः। तुषाग्निनेति पाठान्तरम् ॥ २० ॥

अयमेव ते कत्थने हेतुरित्याह,—नत्विति। गदाधरं मां यतो न पश्यसि सारतो न जानासि अतो विकत्थसे इत्यन्वयः। धराधरमिति पर्वतविशेषणं तेन कुलाचलसादृश्यबोधनम् ॥ २१ ॥

स्वकं सारं दर्शयति,—पर्य्याप्त इति। गदापाणिरिति, गदाहस्त इत्यर्थः। तव त्रयाणां लोकानां चेत्यर्थः ॥ २२ ॥

कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् ।
अस्तं प्राप्नोति सविता युद्धविघ्नस्ततो भवेत् ॥ २३ ॥
चतुर्दशसहस्राणि राक्षसानां हतानि ते ।
त्वद्विनाशात् करोम्यद्य तेषामश्रुप्रमार्जनम् ॥ २४ ॥
इत्युक्त्वा परमक्रुद्धः स गदां परमाङ्गदाम् * ।
खरश्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५ ॥
खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा ।
भस्म वृक्षांश्च गुल्मांश्च कृत्वागात्तत्समीपतः ॥ २६ ॥
तामापतन्तीं महतीं † मृत्युपाशोपमां गदाम् ।
अन्तरीक्षगतां रामश्चिच्छेद बहुधा शरैः ॥ २७ ॥

यद्यपि तद्विषये कामं बहु वक्तव्यमस्ति अथाप्यहं न वक्ष्यामि । त्वद्लाघुत्वापत्तेः । हेत्वन्तरमप्याह, अस्तमिति ॥ २३ ॥

यानि ते त्वया हतानि तेषां तत्सम्बन्धिस्त्रीपुत्रादीनाम् अश्रुमार्जनं करिष्यामि त्वद्विनाशात् त्वन्मरणात् ॥ २४ ॥

परमा अङ्गदाः कनकवलयानि यस्यास्तां प्रसिद्धां हस्तस्थां गदां चिक्षेप ॥ २५ ॥

भस्म कृत्वा खज्वालयेति शेषः । तत्समीपतः रामसमीपतः ॥२६॥२७॥

---

* कनकाङ्किताम् इति वा पाठः ।

† ज्वलितां इति वा पाठः ।

सा विशीर्णा शरैर्भिन्ना पपात धरणीतले।
गदा मन्त्रौषधबलैर्व्यालीव विनिपातिता ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे खररामयोः संग्रामवर्णनं नाम एकोनत्रिंशः सर्गः ॥ २९ ॥

मन्त्रादिबलैर्विनिपातिता व्यालीव ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

# त्रिंशः सर्गः ।



भित्त्वा तु तां गदां बाणै राघवो धर्मवत्सलः ।
स्मयमानः खरं वाक्यं संरब्धमिदमब्रवीत् ॥ १ ॥
एतत् ते बलसर्वस्वं दर्शितं राक्षसाधम ! ।
शक्तिहीनतरो मत्तो वृथा त्वमुपगर्जसि ॥ २ ॥
एषा बाणविनिर्भिन्ना गदा भूमितलं गता ।
अभिधानप्रगल्भस्य तव प्रत्ययघातिनी ॥ ३ ॥
यत् त्वयोक्तं विनष्टानामिदमश्रुप्रमार्जनम् ।
राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४ ॥
नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य राक्षस ! ।
प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५ ॥
अद्य ते भिन्नकण्ठस्य फेनबुद्बुदभूषितम् ।

भित्त्वेति ॥ १ ॥

लब्धावसरो भगवान् त्वयैव कत्थनं कृतमित्याह,—एतदिति

शक्तिहीनतरः शक्त्या हीनतरः ॥ २ ॥

विदारितस्य मद्बाणैर्मही पास्यति शोणितम्॥ ६॥
पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः।
स्वप्स्यसे गां समाश्लिष्य दुर्लभां प्रमदामिव॥ ७॥
प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने।
भविष्यन्ति शरण्यानां शरण्या दण्डका इमे॥ ८॥
जनस्थाने हतस्थाने तव राक्षस! मच्छरैः।
निर्भया विचरिष्यन्ति सर्वतो मुनयो वने॥ ९॥
अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः।
बाष्पार्द्रवदना दीना भयादन्यभयावहाः॥ १०॥
अद्य शोकरसज्ञास्ता भविष्यन्ति निरर्थिकाः।
अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः॥ ११॥

अभिधाने केवलं प्रगल्भस्य [प्रौढ़वादरक्षस्य] तत्रानया शत्रुवधो भवत्येवेत्यर्थं यः प्रत्ययो विश्वासस्तस्य स्वनाशेन घातिका॥३॥४॥५॥६॥

स्रस्तं स्थानादतएव भूमौ न्यस्तं भुजद्वयं येन सः। गां भुवम्॥ ७॥

प्रवृद्धनिद्रे प्रवृद्धदीर्घनिद्रे शरण्याः सुखवासभूताः शरण्यानां तपोमहिम्ना सर्वजनशरण्यानाम् [अशरण्यानामिति पाठे अगतीनामित्यर्थः]॥ ८॥

हतस्थाने हतराक्षसवासे॥ ९॥

विप्रसरिष्यन्ति मद्भयेन जनस्थानात् पलायिष्यन्तीत्यर्थः॥ १०॥

शोकरसज्ञाः शोकस्थायिकरसज्ञाः निरर्थिकाः निःशेषतो नष्टोऽर्थः

नृशंसशील ! क्षुद्रात्मन् ! नित्यं ब्राह्मणकण्टक ! ।
त्वत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२ ॥
तमेवमभिसंरब्धं ब्रुवाणं राघवं रणे ।
खरो निर्भर्त्सयामास रोषात् खरतरस्वरः ॥ १३ ॥
दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः ।
वाच्यावाच्यं ततो हि त्वं मृत्युवश्यो न बुध्यसे ॥ १४ ॥
कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये ।
कार्य्याकार्य्यं न जानन्ति ते निरस्तषड़िन्द्रियाः ॥ १५ ॥

कामादिपुरुषार्थो यासां ताः अनुरूपकुलास्त्वत्सदृशदुर्वृत्तत्वादिगुणवत् कुलाः ईदृशः पापकर्मा ॥ ११ ॥

अस्यैव विवरणं नृशंसेत्यादि । शङ्कितैस्त्वद्दुष्टेभ्यः यद्यपि भगवत ईदृशेषु क्षुद्रेष्वेवं वादोऽनुचितस्तथापि निरयस्थमिति खोक्तिं सत्यां कर्तुं मरणकाले क्रोधजनकतमोगुणोद्रेकस्य तामसगुणगतिसम्पादकस्यो-द्भवायेति बोध्यम् ॥ १२ ॥ १३ ॥

ततो हि अवलिप्तत्वादेव मृत्युवश्योऽपि वाच्यावाच्यं न जानीषे ॥ १४ ॥

परिक्षेपो बन्धः निरस्तषड़िन्द्रियाः सान्तःकरणचक्षुरादिपञ्चेन्द्रियै-र्निरस्ता विनाशितस्वातन्त्र्याः । मृत्युकाले स्फुरितभगवद्रूपः स्वेषेण स्वा-विनयं क्षमापयति च । कालेति । अतस्त्वया मदुक्तयः क्षन्तव्या इति व्यङ्ग्यमित्यन्ये । तेषां निरयस्थमिति भगवदुक्तेरसङ्गतिः स्पष्टैव ॥ १५ ॥

भ्रुकुटिं सन्निरुध्य सन्निबध्य ॥ १६ ॥

एवमुक्का ततो रामं संरुध्य भ्रुकुटिं ततः ।
स ददर्श महाशालमविदूरे निशाचरः ॥ १६ ॥
रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् ।
स तमुत्पाटयामास सन्दष्टदशनच्छदम् ॥ १७ ॥
तं समुत्क्षिप्य बाहुभ्यां विनर्दित्वा महाबलः ।
राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥ १८ ॥
तमापतन्तं बाणौघैश्छित्वा रामः प्रतापवान् ।
रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९ ॥
जातस्वेदस्ततो रामो रोषरक्तान्तलोचनः ।
निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २० ॥
तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् ।
गिरेः प्रस्रवणस्येव धाराणाञ्च परिस्रवः * ॥ २१ ॥

प्रहरणमायुधं तदर्थे सर्वतः प्रहृतमिति शेषः । तादृशसालमवलोकयदित्यर्थः । दशनच्छदमधरं सन्दष्टदशनच्छदं यथा भवति तथा ।१७॥

समुत्क्षिप्य भ्रामयित्वा हतो मारितः ॥ १८ ॥ १९ ॥

जातस्वेदो रोषादिति शेषः । न तु श्रमादिति । अयं रोषोऽपि भगवतारोपित एव नटवन्न तु वास्तवः । मानुषत्वस्थिरीकरणायेति

---

* तोयधारापरिस्रवः इति वा पाठः ।

विकलः स हतो बाणैः खरो रामेण संयुगे ।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद् द्रुतम् ॥ २२ ॥
तमापतन्तं संक्रुद्धं * कृतास्त्रो रुधिराप्लुतम् ।
अपासर्पद्विलिपदं † किञ्चित्त्वरितविक्रमः ॥ २३ ॥
ततः पावकसंकाशं वधाय समरे शरम् ।
खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥ २४ ॥

बोध्यम् । रक्तवर्णेऽन्तभागेऽपाङ्गभागे लोचने यस्य सः । सहस्राक्षा-नन्तेन ॥ २० ॥

बाणान्तरात् बाणकृतविवरात् प्रस्रवणस्य प्रस्रवणाख्यस्य परिस्रवः प्रवाहः ॥ २१ ॥

विकलः परवशः हतो न तु मृत इत्यर्थः । तदेवाह मत्त इति ।२२॥

आपतन्तम् । बाणक्षेपावकाशो यथा न भवति तथोपर्य्यापतन्तं खरं दृष्ट्वात्यासत्तौ धनुर्व्यापारो न स्यादिति स्वशरीरे तद्रुधिरपातभिया च द्वित्रीणि पदानि त्वरितपदन्यासो बाणं सन्दधदेव पृष्ठतोऽपासर्पत् । अनेन महाबलत्वं खरस्योक्तम् । न ह्यन्यथा रामधनुश्छेदोऽन्यत्र तद्बाण-सहनं वा सुशक्यम् अतएवाग्रे तद्वधाय विशिष्य स्वशक्तिरूपवरुणव-बाणग्रहणम् ॥ २३ ॥

---

* संप्रेक्ष्य इति वा पाठः ।

† प्रतिपदं इति वा पाठः । तिर्य्यक् किञ्चिदपासर्पदित्यर्थः ।

स तद्दत्तं मघवता सुरराजेन धीमता ।
सन्दधे च स धर्मात्मा मुमोच च खरं प्रति ॥ २५ ॥
स विमुक्तो महाबाणो निर्घातसमनिःस्वनः ।
रामेण धनुरायम्य खरस्योरसि चापतत् ॥ २६ ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथान्धकः ॥ २७ ॥
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा ।
बलोवेन्द्राशनिहतो निपपात हतः खरः ॥ २८ ॥
एतस्मिन्नन्तरे देवाश्चारणैः सह सङ्गताः ।

ब्रह्मदण्डमिव ब्रह्मास्त्रमिवामोघम् ॥ २४ ॥

मघवता दत्तमगस्त्यद्वारा ॥ २५ ॥

धनुरायम्य विमुक्तः स खरस्योरस्यपतदित्यन्वयः ॥ २६ ॥

श्वेतारण्ये यथान्धकः अन्धकासुरः श्वेतारण्ये रुद्रेण हत इति पुराणप्रसिद्धं रुद्रेणेवेति इवशब्दो वाक्यालङ्कारे । श्वेतारण्ये यथान्तक इति प्रचुरः पाठः । तत्र कावेरीतीरवर्त्तिनि श्वेतारण्ये मार्कण्डेयचिरजीवित्वायान्तकसंहारो रुद्रेण कृत इति तन्माहात्म्ये प्रसिद्धिः । कौर्मे तूत्तरखण्डे श्वेतस्य राजर्षेः परमशैवस्य कालञ्जरे पर्वते तपस्यभिरतस्य मारणायागतस्यान्तकस्य शिवेन वामपादप्रहारेण संहारः कृत इति षट्त्रिंशेऽध्याये उक्तम् ॥ २७ ॥

वज्रेण वृत्र इव फेनेन तदाच्छादितवज्रेण नमुचिरिव न शुष्केण

दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ॥ २९ ॥
रामस्योपरि संहृष्टा ववर्षुर्विस्मितास्तदा ।
अर्धाधिकमुहूर्त्तेन रामेण निशितैः शरैः ॥ ३० ॥
चतुर्दशसहस्राणि रक्षसां कामरूपिणाम् ।
खरदूषणमुख्यानां निहतानि महामृधे ॥ ३१ ॥
अहो बत महत्कर्म रामस्य विदितात्मनः ।
अहो वीर्य्यमहो दार्ढ्यं विष्णोरिव हि दृश्यते ॥ ३२ ॥
इत्येवमुक्त्वा ते सर्वे ययुर्देवा यथागतम् ।
ततो राजर्षयः सर्वे सङ्गताः परमर्षयः ॥ ३३ ॥
सभाज्य मुदिता रामं सागस्त्या इदमब्रुवन् ।
एतदर्थं महातेजा महेन्द्रः पाकशासनः ॥ ३४ ॥
शरभङ्गाश्रमं पुण्यमाजगाम पुरन्दरः ।
आनीतस्त्वमिमं देशमुपायेन महर्षिभिः । ३५ ॥

नार्द्दयेति ब्रह्मणा तस्मै वरदानादप्रनिहतो बलो वा । वाशब्द इवार्थे । एवञ्च अन्धकादिवधस्य रुद्रेन्द्रातिरिक्तासाध्यत्ववत् खरवधस्य रामातिरिक्तासाध्यत्वं प्रकाशितं कविना ॥ २८ ॥ २९ ॥

अर्धाधिकमुहूर्त्तेन किञ्चिदूनघटिकात्रयेण ॥ ३० ॥ ३१ ॥ ३२ ॥

राजर्षयो नहुषाद्याः । परमर्षयो भृग्वाद्याः ॥ ३३ ॥

सभाज्य पूजयित्वा एतदर्थं रक्षसां वधायैतद्देशवासनियोजनार्थं

एषां वधार्थं शत्रूणां रक्षसां पापकर्मणाम्।
तदिदं नः कृतं कार्य्यं त्वया दशरथात्मज! ॥ ३६ ॥
स्वधर्मं प्रचरिष्यन्ति * दण्डकेषु महर्षयः।
एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ॥ ३७ ॥
गिरिदुर्गाद्विनिष्क्रम्य संविवेशाश्रमे सुखी।
ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ॥ ३८ ॥
प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः।
तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ॥ ३९ ॥
बभूव हृष्टा वैदेही भर्त्तारं परिषस्वजे।
मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् ॥ ४० ॥
रामञ्चैवाव्ययं दृष्ट्वा तुतोष जनकात्मजा ॥ ४१ ॥
ततस्तु तं राक्षससंघमर्द्दनं
संपूज्यमानं मुदितैर्महात्मभिः।

क्षणं स्थित्वा रामं प्रस्थाप्य भवद्भिर्ब्रह्मलोकाय प्रस्थातव्यमित्युक्त्वा शरभङ्गं प्रति इन्द्रो गत इत्याशयः ॥ ३४ ॥ ३५ ॥ ३६ ॥

एतस्मिन्नन्तरे देवानां ऋषीणाञ्च निर्गमनसमये ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ४१ ॥

---

* सुखं धर्मं चरिष्यन्ति इति वा पाठः।

पुनः परिष्वज्य मुदान्वितानना *
बभूव हृष्टा जनकात्मजा तदा ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे खर-
विनाशनं नाम त्रिंशः सर्गः ॥ ३० ॥

हर्षातिशयात् पुनरालिङ्गनम् । इदं युद्धं प्रायः शिशिरार्धे ॥४२॥

---

* शशिप्रभानना इति वा पाठः ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ।

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः ।
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १ ॥
जनस्थानस्थिता राजन् ! राक्षसा बहवो हताः ।
खरश्च निहतः संख्ये कथञ्चिदहमागतः ॥ २ ॥
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ।
अकम्पनमुवाचेदं निर्दहन्निव तेजसा ॥ ३ ॥
केन भीमं * जनस्थानं हतं मम परासुना ।
को हि † सर्वेषु लोकेषु गतिं नाधिगमिष्यति । ४ ॥

त्वरमाण इति । खरसंग्रामात् पलायितः शूर्पणखागमनात् पूर्वमेव लङ्कां प्रविश्येत्यर्थः । संपूर्णं दण्डकारण्यं जनस्थानपदवाच्यमतो गोदावरी-तीरादूतोऽपि जनस्थानादूत इत्युक्तः ॥ १ ॥

खरश्चेति चेन दूषणत्रिशिरसोः संग्रहः । कथञ्चिदहमागतः केवलं प्रेक्षकतया स्थितत्वाद्रामबाणाविषयीकृततयेत्याशयः ॥ २ ॥ ३ ॥

---

* रम्यं इति वा पाठः ।
† कोऽद्य इति वा पाठः ।

न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम्।
प्राप्तुं वैश्रवणेनापि न यमेन च विष्णुना॥ ५॥
कालस्य चाप्यहं कालो दहेयमपि पावकम्।
मृत्युं मरणधर्मेण संयोजयितुमुत्सहे॥ ६॥
वातस्य तरसा वेगं निहन्तुमहमुत्सहे।
दहेयं वा स्वयं क्रुद्धस्तेजसादित्यपावकौ॥ ७॥
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः।
भयात् सन्दिग्धया वाचा रावणं याचतेऽभयम्॥ ८॥
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः।
स विस्रब्धोऽब्रवीद्वाक्यमसन्दिग्धमकम्पनः॥ ९॥
पुत्रो दशरथस्यास्ति सिंहसंहननो युवा।
रामो नाम महास्कन्धो वृत्तायतमहाभुजः॥ १०॥
श्यामः पृथुयशाः श्रीमानतुल्यबलविक्रमः।
हतस्तेन जनस्थाने खरश्च सहदूषणः॥ ११॥

भीमं सर्वलोकभयदं जनस्थानम्। परासुनेति क्रोधात् मुमूर्षुणेत्यथ प्रयुक्तं गतिं स्थितिम्॥ ४॥ ५॥ ६॥

निहन्तुं भंक्तुम् आदित्यपावकौ उभावपि युगपदिति शेषः॥ ७॥

सन्दिग्धया सन्दिग्धाक्षरया। अभयमिति च्छेदः॥ ८॥ ९॥

वराङ्गरूपोपेतो यः सिंहसंहननो हि स इति कोशः॥ १०॥

अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः।
नागेन्द्र इव निःश्वस्य इदं वचनमब्रवीत् ॥ १२ ॥
स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह।
उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ! ॥ १३ ॥
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः।
आचचक्षे बलं तस्य विक्रमञ्च महात्मनः ॥ १४ ॥
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम्।
दिव्यास्त्रगुणसम्पन्नः परं धर्मं गतो * युधि ॥ १५ ॥
तस्यानुरूपो बलवान् रक्ताक्षो दुन्दुभिस्वनः।
कनीयान् लक्ष्मणो भ्राता राकाशशिनिभाननः ॥ १६ ॥

अतुल्यं केनापि तुलानर्हं बलं विक्रमश्च यस्य सः स दूषणः खरश्च हत इत्यन्वयः ॥ ११ ॥

नागेन्द्रः सर्पश्रेष्ठः। १२ ॥

स रामः सर्वामरसहितेन्द्रेण जनस्थानं कच्चिदुपागत इत्यन्वयः ॥ ॥ १३ ॥ १४ ॥

परं धर्मम् अतिशयितं शौर्य्यम् ॥ १५ ॥

राकाशशिनिभानन इति राका पूर्णिमा। पूर्णे राका निशाकरे इत्यमरः। पूर्णनिशाकरवदन इत्यर्थः ॥ १६ ॥

---

* पुरन्दरसमः इति वा पाठः।

स तेन सह संयुक्तः पावकेनानिलो यथा ।
श्रीमान् राजवरस्तेन जनस्थानं निपातितम् ॥ १७ ॥
नैव देवा महात्मानो नात्र कार्य्या विचारणा ।
शरा रामेण उत्सृष्टा रुक्मपुंखाः पतत्रिणः ॥ १८ ॥
सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् ।
येन येन च गच्छन्ति राक्षसा भयकर्षिताः ॥ १९ ॥
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् ।
इत्थं विनाशितं तेन जनस्थानं तवानघ ! ॥ २० ॥
अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
गमिष्यामि जनस्थानं रामं हन्तुं सलक्ष्मणम् । २१ ॥
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः ।
शृणु राजन् ! यथा वृत्तं रामस्य बलपौरुषम् ॥ २२ ॥

राजवरः राजराज इति यावत् ॥ १७ ॥

महात्मानो देवानैवागता इति शेषः । रामेण तु न तु लक्ष्मणेनापीत्यर्थः । [सर्पा इति उत्प्रेक्षेयम्] ॥ १८ ॥

भयात् पलायनाय येन मार्गेण गच्छन्ति राक्षसास्तेन तेन मार्गेणागत्याग्रतस्थितमेव रामं पश्यन्ति । अनेनानन्ताकारताप्रदर्शनेन रामस्यापरिच्छिन्नशक्तित्वं सूचितम् ॥ १९ ॥ २० ॥ २१ ॥

बलं पराभिभवसामर्थ्यं पौरुषं महापुरुषकर्म वृत्तं चरितं यथा यादृशं तत्सर्वं शृणिवत्यर्थः ॥ २२ ॥

असाध्यः कुपितो रामो विक्रमेण महायशाः।
आपगायास्तु पूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥
सताराग्रहनक्षत्रं नभश्चाप्यवसादयेत्।
असौ रामस्तु सीदन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४ ॥
भित्त्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः।
वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥
संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः।
शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥
न हि रामो दशग्रीव! शक्यो जेतुं रणे त्वया।

कुपितः कुपितोऽन्तक इव संहारे प्रवृत्तो रामः पराक्रमेण ततो निवर्त्तयितुमसाध्यो ब्रह्मादिभिरपीति शेषः। परिहरेत् परावर्तयेत्। अनेन कृष्णबलभद्रावतारस्यापि सूचनम्॥ २३ ॥

नभोऽप्यवसादयेत् तारारहितं कुर्य्यात् त्रिविक्रमावतार इव महीमभ्युद्धरेत् यज्ञवराह इव शक्यर्थे एते लिङः॥ २४ ॥

वेलां मर्य्यादाम् आप्लावयेत्। प्रलयकाल इव समुद्रस्य वेगं विधमेत्। समुद्रे सेतुबन्धनसामर्थ्यं दर्शितं वायुमित्युपलक्षणं भूतपञ्चकस्य॥ २५ ॥

संहृत्य पुनः स्रष्टुं शक्तः अत्र पुनरपिशब्दाभ्यां सर्वसृष्टिसंहाराणां तदधीनत्वमुक्तम्। अनेन जगत्स्थितिसंहारकर्तृत्वमस्य व्यञ्जनम्। अत्रम्यनस्यापि भगवत्प्रसादादेवं ज्ञानम्॥ २६ ॥

रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७ ॥
न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि ।
अयं तस्य वधोपायस्तन्ममैकमनाः शृणु ॥ २८ ॥
भार्य्या तस्योत्तमा लोके सीता नाम सुमध्यमा ।
श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९ ॥
नैव देवी न गन्धर्वी नाप्सरा न च पन्नगी * ।
तुल्या सीमन्तिनी तस्या मानुषी तु कुतो भवेत् ॥ ३० ॥
तस्यापहर भार्य्यां त्वं तं प्रमथ्य महावने ।
सीतया रहितो रामो न चैव हि भविष्यति † ॥ ३१ ॥
अरोचयत तद्वाक्यं रावणो राक्षसाधिपः ।

लोकेन समूहेन सहितेनापीति शेषः ॥ २७ ॥

अपिना त्वयापि एतेनेन्द्रजिन्निर्जितेन्द्रादिसहायेऽपि तस्य जयोऽसुकर इति ध्वनितम् । ममेति मुखादिति शेषः ॥ २८ ॥

श्यामा यौवनमध्यस्था ॥ २९ ॥

कुतो भवेत् तुल्येति शेषः ॥ ३० ॥

तं रामं प्रमथ्य केनाप्युपायेनोन्माद्येति यावत् । तस्य भार्य्यां अपहर बलात्कारेण हर ॥ ३१ ॥

---

* नापि दानवी इति वा पाठः ।

† सीतया रहितः कामी रामो हास्यति जीवितम् इति वा पाठः

चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२ ॥
बाढं काल्यं गमिष्यामि एकः सारथिना सह ।
आनेष्यामि च वैदेहीमिमां हृष्टो महापुरीम् ॥ ३३ ॥
तदेवमुक्त्वा प्रययौ खरयुक्तेन रावणः ।
रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४ ॥

अरोचयत। इष्टत्वेन ज्ञातवान्। चिन्तयित्वा रामस्य सीतया सहानवस्थानोपायम् ॥ ३२ ॥

काल्यं प्रातः सान्तमव्ययम्। हृष्ट इति अकम्पनवाक्यं श्रुत्वा त्रेतामुखे श्रीरामोऽवतरिष्यतीति सनत्कुमारवाक्यस्मरणाद्धृष्टः तदेतदुत्तररामायणे स्पष्टम्। तत्र हि सनत्कुमारं प्रति विष्णुहस्तमृतानां का गतिरिति रावणेन पृष्टे तेन हतानां तल्लोकप्राप्तिरिति सनत्कुमारवचः श्रुत्वा। एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान्। त्वया सह विरोधेप्सुश्चिन्तयामास राघव। एतदर्थं महाबाहो रावणेन महात्मना। सुता जनकराजस्य हृता राम महावने इत्युक्तमिति तीर्थः। उत्तमस्त्रीलाभो भविष्यतीति हृष्ट इत्यर्थ उचितः। श्रुतस्यापि तस्यार्थस्य तामसत्वेन विस्मरणात्। ते पद्ये तु न यथाश्रुतार्थे वक्ष्यमाणविष्णुपुराणविरोधात्। किन्तु श्रीरामस्य स्वमृत्योरवतारं श्रुत्वा त्वया सह मृत्युघातकविरोधेच्छुस्तां हृतवान्। तद्वियोगे तव मरणमित्याशयेनेति तयोरर्थ इत्यन्ये। वस्तुतस्तु एतेषां श्लोकानां तद्गतां सर्गाणाञ्च प्रक्षिप्तत्वात् न ते प्रमाणभूताः अतएव ते सर्गाः कतकादिभिस्तीर्थेन च न व्याख्याताः एतेन एतदर्थं महाबाहो रावणेन दुरात्मना। विज्ञायापहृता सीता त्वत्तो

स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् ।
चञ्चूर्य्यमाणः * शुशुभे जलदे चन्द्रमा इव ॥ ३५ ॥
स दूरे चाश्रमं गत्वा ताटकेयमुपागमत् ।
मारीचेनार्च्चितो राजा भक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥
तं स्वयं पूजयित्वा तु आसनेनोदकेन च ।
अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७ ॥
कच्चित् सुकुशलं राजन् ! लोकानां राक्षसाधिप ! ।
आशङ्के नाधिजाने त्वं यतस्तूर्णमिहागतः ॥ ३८ ॥
एवमुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ३९ ॥

मरणकाङ्क्षयेति तत्र पाठो दृश्यते । तत्र च त्वदुक्तार्थासंभाव इत्य-पास्तम् ॥ ३३ ॥ ३४ ॥

चंचर्य्यमाणः भृशं चरन् जलदसदृशं गगनं चन्द्रसदृशो रथः ॥३५॥

मारीचाश्रमम् । पूर्वं रामनिरस्तस्य दुःखात्तपःप्रवृत्तेरेवमुक्तिः । ताटकेयं ताटकापत्यम् ॥ ३६ ॥

अर्थोपहितया किं प्रयोजनमत्रागमनमिति प्रयोजनयुक्तया ॥ ३७ ॥

कच्चित् सुकुशलमिति सामान्यप्रश्नः । लोकानां राक्षसलोकानाम् ।

---

* सन्त्वर्य्यमाणः इति वा पाठः ।

आरक्षो मे हतस्तात! रामेणाक्लिष्टकारिणा।
जनस्थानमवध्यं तत् सर्वं युधि निपातितम् ॥ ४० ॥
तस्य मे कुरु साचिव्यं तस्य भार्य्यापहारणे।
राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥
आख्याता केन सा सीता मित्ररूपेण शत्रुणा।
त्वया राक्षसशार्दूल! को न नन्दति नन्दितः ॥ ४२ ॥
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे।
रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति * ॥ ४३ ॥

आशङ्के भयमिति शेषः। नाधिजाने क्षेममिति शेषः। यतस्त्वमेकाकी तूर्णमागतः ॥ ३८ ॥ ३९ ॥

आरक्षः समाजस्थानं जनस्थानाख्यं आरक्षोऽन्तपालः खरादिरित्यर्थ इत्यन्ये ॥ ४० ॥ ४१ ॥

सा सीता केनाख्याता हर्त्तव्यत्वेन कथिता येन कथिता स मित्ररूपस्ते शत्रुः। त्वया रामादिना नन्दितो को न नन्दति। निन्दित इति पाठे निन्दितोऽवमानितः। कस्त्वां न नन्दति न सन्तुष्यति क्रुध्यतीति यावत्। त्वया तिरस्कृतस्तावकमैश्वर्य्यमसहमानः सन् त्वया सह कृत्रिममित्रभावं प्राप्तः सन्तवेदृशीं बुद्धिमुपदिशतीति भावः ॥ ४२ ॥

---

* रक्षोलोकस्य कः शृङ्गं छेत्तुमिच्छति साम्प्रतम्।
इति वा पाठः।

प्रोत्साहयति यश्च त्वां स च शत्रुर्न संशयः ।
आशीविषमुखाद्दंष्ट्राम् उद्धर्तुं चेच्छति त्वया ॥ ४४ ॥
कर्मणानेन केनासि कापथं प्रतिपादितः ।
सुखसुप्तस्य ते राजन्! प्रहृतं केन मूर्धनि ॥ ४५ ॥

विशुद्धवंशाभिजनाग्रहस्त-
स्तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं रावण! नेह युक्तः
स संयुगे राघवगन्धहस्ती ॥ ४६ ॥
असौ रणान्तःस्थितिसन्धिवालो
विदग्धरक्षोमृगहा नृसिंहः ।

'सीतामिहानयेति को ब्रवीति तं ब्रवीहि । इंडार्थः । पृष्टुमौ-
न्नत्यम् ॥ ४३ ॥

स च शत्रुरसंशयमित्यत्र हेतुमाह,—आशीविषेत्यादि च । यस्मात्
त्वया प्रयोज्येनाशीविषमुखाद्दंष्ट्रामुद्धर्तुम् उद्धारयितुमिच्छति ॥ ४४ ॥

केन शत्रुणानेन कर्मणा एतत् कर्मोपदेशेन कापथं नाशमार्गमिति
यावत् । प्रहृतं तथैव दुःखमुत्पादितमित्यर्थः ॥ ४५ ॥

राघवरूपो गन्धहस्ती यस्य गन्धं समाघ्रायान्ये गजाः पलायन्ते स ग-
न्धहस्ती मत्तगजः । उदीक्षितुमपि इह देशे काले न युक्तः किं पुनर्योद्धु-
मित्यर्थः । विशुद्धवंशोऽभिजनोऽभिजननमेवाग्रहस्तः शुण्डाग्रं यस्य । तेजः

सुप्तस्त्वया बोधयितुं न शक्यः
शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७ ॥
चापापहारे भुजवेगपङ्के
शरोर्म्मिमाले सुमहाहवौघे ।
न रामपातालमुखेतिघोरे
प्रस्कन्दितुं राक्षसराज ! युक्तम् ॥ ४८ ॥
प्रसीद लङ्केश्वर ! राक्षसेन्द्र !
लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं
रामः सभार्य्यो रमतां वनेषु । ४९ ॥
एवमुक्तो दशग्रीवो मारीचेन स रावणः ।

प्रताप एव मदो यस्य सः । संस्थितौ समीचीनावस्थानौ दोषौ बाहू एव विषाणे दन्तौ यस्य ॥ ४६ ॥

रणान्तःस्थितिरूपा रणमध्यावस्थानरूपाः सन्धयो वालाश्च यस्य विदग्धरक्षसां रणचतुराणां राक्षसमृगाणां हन्ता शररूपैरङ्गैः पूर्णः ॥ ४७ ॥

चाप एवापहारः प्राणिप्राणापहारको ग्राहको यस्मिन् । भुजयोः शरग्रहणसन्धानमोक्षविषयो वेग एव पङ्को यस्मिन् दुस्तरत्वात्तत्र । शरा एवोर्म्मिमालास्तरङ्गा यस्मिन् सुमहानाहव एव ओघो जलं यस्य तस्मिन्

न्यवर्त्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावणस्य
लङ्कागमनं नाम एकत्रिंशः सर्गः ॥ ३१ ॥

राम एव पातालं पातालप्रविष्टमहार्णवस्तस्य मुखे वड़वामुखरूपे प्रस्कन्दितुं पतितुम् ॥ ४८ ॥ ४९ ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

# द्वात्रिंशः सर्गः ।



ततः शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश ।
हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ॥ १ ॥
दूषणञ्च खरञ्चैव हतं त्रिशिरसं रणे ।
दृष्ट्वा पुनर्महानादं ननाद जलदोपमा ॥ २ ॥
सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् ।
जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३ ॥
सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् ।
उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ॥ ४ ॥
आसीनं सूर्य्यसंकाशे काञ्चने परमासने ।
रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम् ॥ ५ ॥
देवगन्धर्वभूतानामृषीणाञ्च महात्मनाम् ।
अजेयं समरे घोरं व्यात्ताननमिवान्तकम् ॥ ६ ॥

तत इति ॥ १ ॥

महानादान्ननाद शोकादिति शेषः ॥ २ ॥ ३ ॥ ४ ॥

रुक्मवेदिं प्राप्तं हिरण्येष्टकचितां वेदिं प्राप्तं प्राज्यं भूय्याज्यहोमवन्तं अतएव ज्वलन्तम् ॥ ५ ॥ ६ ॥

देवासुरविमर्देषु वज्राशनिकृतव्रणम्।
ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ७ ॥
विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम्।
विशालवक्षसं वीरं राजलक्षणलक्षितम् ॥ ८ ॥
नद्ध * वैदूर्य्यसंकाशं तप्तकाञ्चनभूषणम् †।
सुभुजं शुक्लदशनं महास्यं पर्वतोपमम्। ९ ॥
विष्णुचक्रनिपातैश्च शतशो देवसंयुगे।
अन्यैः शस्त्रप्रहारैश्च महायुद्धेषु ताड़ितम् ॥ १० ॥
आहताङ्गं समस्तैस्तु देवप्रहरणैस्तथा।
अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ॥ ११ ॥
क्षेप्तारं पर्वताग्राणां सुराणाञ्च प्रमर्दनम्।

विमर्दो युद्धम्। वज्राशनिकृतव्रणमित्यनेन तदवध्यत्वमुक्तम्। ऐरावतदन्ताग्रैरुत्कृष्टं विलेखनं तेन जातो यः किणस्तदङ्कितवक्षसम् ॥ ७ ॥

परिच्छदः छत्रचामरालङ्करणादीनि ॥ ८ ॥

वैदूर्य्यं श्यामरक्तं श्याममित्यन्ये। स्वशरीरनद्धवैदूर्य्यकान्तिसदृशशरीरकान्तीत्यर्थः। स्निग्धवैदूर्य्येति पाठो बहुलम् ॥ ९ ॥ १० ॥

---

* स्निग्ध इति वा पाठः।

† कुण्डलम् इति वा पाठः।

उच्छेत्तारञ्च धर्माणां परदाराभिमर्षणम् ॥ १२ ॥
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा ।
पुरीं भोगवतीं गत्वा पराजित्य च वासुकिम् ॥ १३ ॥
तक्षकस्य प्रियां भार्य्यां पराजित्य जहार यः ।
कैलासं पर्वतं गत्वा विजित्य नरवाहनम् ॥ १४ ॥
विमानं पुष्पकं तस्य कामगं वै जहार यः ।
वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम् ॥ १५ ॥
विनाशयति यः क्रोधाद्देवोद्यानानि वीर्य्यवान् ।
चन्द्रसूर्य्यौ महाभागौ उत्तिष्ठन्तौ परन्तपौ ॥ १६ ॥
निवारयति बाहुभ्यां यः शैलशिखरोपमः ।
दशवर्षसहस्राणि तपस्तप्त्वा महावने ॥ १७ ॥
पुरा स्वयम्भुवे धीरः शिरांस्युपजहार यः ।
देवदानवगन्धर्वपिशाचपतगोरगैः ॥ १८ ॥
अभयं यस्य संग्रामे मृत्युतो मानुषादृते ।
मन्त्रैरभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ॥ १९ ॥

क्षोभणं क्षोभकर्त्तारम् ॥ ११ ॥ १२ ॥
परदाराभिमर्षणं विहणोति । पुरीमिति ॥ १३ ॥ १४ ॥
नलिनीं चैत्ररथवनमध्यवर्त्तिनीं सरसीम् ॥ १५ ॥
उत्तिष्ठन्तावुदयन्तौ ॥ १६ ॥ १७ ॥

हविर्धानेषु यः सोममुपहन्ति महाबलः।
प्राप्तयज्ञहरं दुष्टं ब्रह्मघ्नं क्रूरकारिणम्॥ २०॥
कर्कशं निरनुक्रोशं प्रजानामहिते रतम्।
रावणं सर्वभूतानां सर्वलोकभयावहम्॥ २१॥
राक्षसी भ्रातरं क्रूरं सा ददर्श महाबलम्।
तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम्॥ २२॥
आसने सूपविष्टन्तं काले कालमिवोद्यतम्।
राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम्॥ २३॥
उपगम्याब्रवीद्वाक्यं राक्षसी भयविक्लवा।
रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम्॥ २४॥
तमब्रवीद्दीप्तविशाललोचनं
प्रदर्शयित्वा भयलोभमोहिता।

उपजहार उपहारत्वेन दत्तवान्॥ १८॥

यस्य संग्रामे मृत्युतोऽभयं मनुष्यातिरिक्ततो मरणभयहीन इत्यर्थः। मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिरभिष्टुतं सोमं हविर्धानेषु सोमाभिषवशालासु उपहन्ति नाशयति। प्राप्तान् दक्षिणाकालं प्राप्तान् यज्ञान् हरति तम्॥ १९॥ २०॥

सर्वभूतानां रावणम् आक्रोशशब्दकारिणम्॥ २२॥

काले प्रलयकाले पौलस्त्या राक्षसाः॥ २३॥ २४॥

उपगम्याब्रवीदित्युक्तं तस्य विवरणम्। तमिति। प्रदर्शयित्वा स्वकं

सुदारुणं वाक्यमभीतचारिणी
महात्मना शूर्पणखा विरूपिता ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे लङ्कायां
शूर्पणखागमनं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥

वैरूप्यमिति शेषः। भयं राक्षसवधेन रामजं शोभक्तत्सौन्दर्य्यं तद्विषयत्ताभ्यां मोहिता अभीतं यथा भवति तथा सर्वलोकेषु चरति तच्छीला ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ।

---

ततः शूर्पणखा दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥
प्रमत्तः कामभोगेषु स्वैरवृत्तो निरंकुशः ।
समुत्पन्नं भयं घोरं बोध्यव्यं नावबुध्यसे ॥ २ ॥
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् ।
लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥
स्वयं कार्य्याणि यः काले नानुतिष्ठति पार्थिवः ।
स तु वै सह राज्येन तैश्च कार्य्यैर्विनश्यति ॥ ४ ॥
अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ।

तत इति ॥ १ ॥

कामभोगेषु प्रमत्तः अतिशयप्रसक्तः निरंकुशः सन् बोद्धव्यं नावबुध्यसे इत्यन्वयः ॥ २ ॥

हेयोपादेयराजगणानाह रावणस्य गुणहीनत्वं वक्तुं सक्तमिति । ग्राम्यभोगः स्त्र्यादिभोगः तदेवाह, कामवृत्तमिति कामचेष्टापरं लुब्धं भोगलोलुपम् । श्मशानाग्निमिव अस्पृश्यत्वेन सादृश्यम् ॥ ३ ॥

तैः कार्य्यैरननुष्ठितैः ॥ ४ ॥

वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५ ॥
ये न रक्षन्ति विषयमस्वाधीनं नराधिपाः।
ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥
आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः।
अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७ ॥
त्वन्तु बालस्वभावश्च बुद्धिहीनश्च राक्षस !।
ज्ञातव्यञ्च न जानीषे कथं राजा भविष्यसि ॥ ८ ॥
येषां चारश्च कोशश्च नयश्च जयतां वर !।
अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ ९ ॥
यस्मात् पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः।
चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥
अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्युतः।
स्वजनञ्च जनस्थानं निहतं नावबुध्यसे ॥ ११ ॥

अयुक्तचारमनियोजितचारं दुर्दर्शमुचिते काले प्रजाभ्यो दर्शनदानरहितम्। अस्वाधीनं स्त्र्यादिपरतन्त्रम् ॥ ५ ॥

विषयं देशम् अस्वाधीनं स्वभिन्नाधीनं पूर्वं स्वाधीनं देशं पश्चात्परायत्तं ये न रक्षन्ति स्वाधीनीकरणेनेति शेषः। ते न प्रकाशन्ते सागरे मग्ना गिरय इव ॥ ६ ॥

आत्मवद्भिर्वशीकृतान्तर्बहिरिन्द्रियैः विगृह्य विरुध्य ॥ ७ ॥ ८ ॥

प्राकृतैः राजव्यवहारानर्हदासीदासजनैः ॥ ९ ॥ १० ॥

चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२ ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ।
धर्षितञ्च जनस्थानं रामेणाक्लिष्टकारिणा ॥ १३ ॥
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च राक्षस ! ।
विषये स्वे समुत्पन्नं यद्भयं नावबुध्यसे ॥ १४ ॥
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने नाभिधावन्ति सर्वभूतानि पार्थिवम् ॥ १५ ॥
अभिमानिनमग्राह्यमात्मसम्भावितं नरम् ।
क्रोधनं व्यसने हन्ति स्वजनोऽपि नराधिपम् ॥ १६ ॥
नानुतिष्ठति कार्य्याणि भयेषु न बिभेति च ।
क्षिप्रं राज्याच्युतो दीनस्तृणैस्तुल्यो भवेदिह ॥ १७ ॥
शुष्ककाष्ठैर्भवेत् कार्य्यं लोष्टैरपि च पांसुभिः ।

स्वजनं स्वस्य जना यस्मिन् तत् ॥ ११ ॥ १२ ॥

कृतं क्षेमं येषु ते कृतक्षेमाः ॥ १३ ॥ १४ ॥

तीक्ष्णं स्वामात्यादिविषये तैक्ष्ण्यादिगुणविशिष्टं शठो मूढ़विप्रियकारी तादृशं राजानं सर्वभूतानि भृत्यामात्यादिसर्वप्रजा नाभिधावन्ति तद्रक्षणाय न प्रवर्त्तन्ते ॥ १५ ॥

अग्राह्यं स्वीयैरनुपसर्प्यम् । आत्मसम्भावितम् आत्मना स्वेनैव सम्भावितं बहुमानं प्राप्तम् अक्रोधनम् अस्थाने क्रोधवन्तम् ॥ १६ ॥

न तु स्थानात् परिभ्रष्टैः कार्य्यं स्याद्वसुधाधिपैः ॥ १८ ॥

उपभुक्तं यथा वासः स्रजो वा मृदिता यथा ।

एवं राज्यात् परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९ ॥

अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः ।

कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥

नयनाभ्यां प्रसुप्तो वा जागर्त्ति नयचक्षुषा ।

व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१ ॥

त्वं तु रावण ! दुर्बुद्धिर्गुणैरेतैर्विवर्जितः ।

यस्य तेऽविदितश्चारै रक्षसां सुमहान् वधः ॥ २२ ॥

परावमन्ता विषयेषु सङ्गवा-

न्न देशकालप्रविभागतत्त्ववित् ।

अयुक्तबुद्धिर्गुणदोषनिश्चये

विपन्नराज्यो न चिराद्विपत्स्यसे ॥ २३ ॥

नानुतिष्ठति यस्य अमात्यादिस्वजनोऽप्रीत्याकर्षः । स राज्याच्च्युतो भवेदित्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥

सर्वज्ञः स्वपरसर्ववृत्तान्तज्ञः ॥ २० ॥

प्रसुप्तो वा प्रसुप्तोऽपि व्यक्तक्रोधप्रसादः फलदानेन ॥ २१ ॥

अविदितः येन त्वया न ज्ञात इत्यर्थः ॥ २२ ॥

परेषामवमन्ता केवलमवमन्तैव न तु तन्नाशविषयबुद्धिः । न चिरात क्षिप्रं विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः ॥ २३ ॥

इति स्वदोषान् परिकीर्त्तितांस्तथा
समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितो
विचिन्तयामास चिरं स रावणः ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे शूर्पणखा-
भर्त्सनं नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

धनेनाक्षयकोशेन दर्पेण राजत्वाहङ्कारेण बलेन प्राणबलेन चतुरङ्ग-
बलेन च चिन्तयामास । मारीचः कलहं निवारयति एषा कलहार्थं
प्रोत्साहयति किमत्र कर्त्तव्यमिति विचारयामासेत्यर्थः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## चतुस्त्रिंशः सर्गः।



ततः शूर्पणखां दृष्ट्वा ब्रुवतीं परुषं वचः।
अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः॥ १॥
कश्च रामः कथं वीर्य्यः किं रूपः किं पराक्रमः।
किमर्थं दण्डकारण्यं प्रविष्टश्च सुदुश्चरम्॥ २॥
आयुधं किञ्च रामस्य येन ते राक्षसा हताः।
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा॥ ३॥
तत्त्वं ब्रूहि मनोज्ञाङ्गि! केन त्वञ्च विरूपिता।
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्च्छिता॥ ४॥
ततो रामं यथान्यायमाख्यातुमुपचक्रमे।
दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः॥ ५॥
कन्दर्पसमरूपश्च रामो दशरथात्मजः।
शक्रचापनिभं चापं विकृष्य कनकाङ्गदम्॥ ६॥
दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान्।
नाददानं शरान् घोरान् विमुञ्चन्तं महाबलम्॥ ७॥

तत इति॥ १॥ २॥ ३॥ ४॥
किं रूप इत्यस्योत्तरं दीर्घबाहुरित्यादि॥ ५॥

न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे।
हन्यमानन्तु तत् सैन्यं पश्यामि शरवृष्टिभिः ॥ ८ ॥
इन्द्रेणेवोत्तमं सस्यमाहतंत्वश्मवृष्टिभिः।
रक्षसां भीमवीर्य्याणां सहस्राणि चतुर्दश ॥ ९ ॥
निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना।
अर्धाधिकमुहूर्त्तेन खरश्च सहदूषणः ॥ १० ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ ११ ॥
एका कथञ्चिन्मुक्ताहं परिभूय महात्मना।
स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ १२ ॥
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः।
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्य्यवान् ॥ १३ ॥
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १४ ॥
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना।

कस्य राम इत्यस्योत्तरं दशरथात्मजः कनकाङ्गदं कनकवलयभूषितं चापम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

खरश्च सहदूषणो हत इत्यर्थः ॥ १० ॥

किमर्थं दण्डकारण्यं प्रविष्ट इत्यस्योत्तरम् ऋषीणामित्यादि ॥ ११ ॥

पूर्वतनं वृत्तं गोपयन्तीत्याह,—एकेति। परिभूय नासाकर्णहीनां कृत्वा ॥ १२ ॥ १३ ॥

धर्मपत्नी प्रिया नित्यं भर्तुः प्रियहिते रता ॥ १५ ॥
सा सुकेशी सुनासोरुः सुरूपा च यशस्विनी ।
देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १६ ॥
तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा ।
सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १७ ॥
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
तथारूपा मया नारी दृष्टपूर्वा महीतले ॥ १८ ॥
यस्य सीता भवेद्भार्या यञ्च हृष्टा परिष्वजेत् ।
अभिजीवेत् स सर्वेषु लोकेष्वपि पुरन्दरात् ॥ १९ ॥
सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि ।
तवानुरूपा भार्य्या सा त्वञ्च तस्यास्तथा पतिः ॥ २० ॥
तां तु विस्तीर्णजघनां पीनोत्तुङ्गपयोधराम् ।
भार्य्यार्थे तु तवानेतुमुद्यताहं वराननाम् ॥ २१ ॥
विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज ! ।

रामस्य दक्षिणो बाहुरित्यनेन सर्वतत्कार्य्यधुरन्धरत्वम्, बहिश्चरः प्राण इत्यनेन निरतिशयप्रेमास्पदत्वं सूच्यते ॥१४।१५।।१६।।१७॥१८॥
यस्य सीता भार्य्या यञ्च हृष्टा परिष्वजेत् स एव सर्वेषु कालेषु च पुरन्दरादपि अभ्यधिकं जीवेत्। तस्या लक्ष्म्यवतारत्वादिति व्यङ्ग्यम् ॥ [अतिजीवेत् स सर्वेषु देवेष्विव पुरन्दर इति पाठे सर्वान् देवानतिक्रम्य जीवेदित्यर्थः] ॥ १९ ॥ २० ॥

तां तु दृष्ट्वाद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ॥ २२ ॥
मन्मथस्य शराणाञ्च त्वं विधेयो भविष्यसि ।
यदि तस्यामभिप्रायो भार्य्यात्वे तव जायते ।
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः * ॥ २३ ॥
रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर ! ।
क्रियतां निर्विशङ्केन वचनं मम रावण ! ॥ २४ ॥
विज्ञायैषामशक्तिञ्च क्रियतामबला बलात् ।
सीता तवानवद्याङ्गी भार्य्यार्थे राक्षसेश्वर ! ॥ २५ ॥

तवानेतुमुद्यताहमिति मृषावचो रावणसन्तोषार्थम् ॥२१॥२२॥
भार्य्यात्वे भार्य्यात्वेन सम्पादने ॥ २३ ॥ २४ ॥
एषां रामादीनामशक्तिं तेषां राज्याद्यभावाच्चकारात्तव शक्तिञ्च विज्ञाय सीता तव भार्य्यात्वे क्रियतां भार्य्यात्वे तद्व्यवहारे यथा विषयो भवति तथा क्रियतां यत्यतामित्यर्थः ॥ २५ ॥

---

* कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर ! ।
वधात्तस्य नृशंसस्य रामस्य वनवासिनः ॥
तं शरैर्निशितैर्हत्वा लक्ष्मणञ्च महारथम् ।
हतनाथां सुखं सीतां यथावदुपभोक्ष्यसे ॥

इत्यतिरिक्तं पाश्चात्याः ।

निशम्य रामेण शरैरजिह्मगै-
र्हतान् जनस्थानगतान्निशाचरान् ।
खरञ्च दृष्ट्वा निहतञ्च दूषणं
त्वमद्य कृत्यं प्रतिपत्तुमर्हसि ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे सीतापहारणे
शूर्पणखाप्रोत्साहनं नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥

अद्य कृत्यमेतत्कालोचितकृत्यं कर्तुं योग्यं तत् प्रतिपत्तुं निश्चित्य
ज्ञात्वा प्रवर्तयितुमर्हसीत्यर्थः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

# पञ्चत्रिंशः सर्गः ।



ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय कार्य्यं बुध्वा जगाम ह ॥ १ ॥
तत् कार्य्यमनुगम्याथ यथावदुपलभ्य च ।
दोषाणाञ्च गुणानाञ्च सम्प्रधार्य्य बलाबलम् ॥ २ ॥
इति कर्त्तव्यमित्येव कृत्वा निश्चयमात्मनः ।
स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ ३ ॥

तत इति । शूर्पं शोणितभाजनं नखविदूषणा इति धातुः । शूर्पेण शोणितभाजनेन यज्ञादिसत्क्रियां नखयति विदूषयति इति शूर्पणखेति तीर्थः । शूर्पाकारनखवतीत्यर्थे संज्ञायां शूर्पणखा अन्यत्र शूर्पनखीति परे । रोमहर्षणम् । शूर्पणखावाक्यस्य कामविकारजनकतया रोमाञ्च-कारत्वम् । सचिवेभ्यस्तद्वाक्यस्य प्रतिपाद्यं कार्य्यं बुध्वा तत्सम्मतिपूर्वकं तत् कर्त्तव्यत्वेन निर्धार्य्य तानभ्यनुज्ञाय दत्ताभ्यनुज्ञान् कृत्वा जगाम मारीचाश्रममिति शेषः ॥ १ ॥

तत्कार्य्यं सीतापहाररूपम् अन्तश्चित्ते अनुगम्योद्दिश्य दोषाणां गुणानाञ्च स्वरूपं यथावदुपलभ्य सीतापहारे एतावन्तो गुणा इति निश्चित्य बलाबलं यथावत् सम्प्रधार्य्य इत्येव कर्त्तव्यमित्यात्मनः स्वस्य

यानशालां ततो गत्वा प्रच्छन्नं राक्षसाधिपः।
सूतं सञ्चोदयामास रथः संयुज्यतामिति ॥ ४ ॥
एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः।
रथं संयोजयामास तस्याभिमतमुत्तमम् ॥ ५ ॥
कामगं रथमास्थाय काञ्चनं रत्नभूषितम्।
पिशाचवदनैर्युक्तं खरैः कनकभूषणैः ॥ ६ ॥
मेघप्रतिमनादेन स तेन धनदानुजः।
राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिम् ॥ ७ ॥
स श्वेतवालव्यजनः श्वेतच्छत्रो दशाननः।
स्निग्धवैदूर्यसंकाशस्तप्तकाञ्चनभूषणः ॥ ८ ॥
दशास्यो विंशतिभुजो दर्शनीयपरिच्छदः।
त्रिदशारिर्मुनीन्द्रघ्नो दशशीर्ष इवाद्रिराट् ॥ ९ ॥
कामगं रथमास्थाय शुशुभे राक्षसाधिपः।
विद्युन्मण्डलवान् मेघः सबलाक इवाम्बरे ॥ १० ॥

निश्चयं कृत्वा अकम्पनशूर्पणखाभ्यामुक्तत्वात् सीताहरणमवश्यं कर्तव्यमिति निश्चित्य यानशालां जगाम ॥ २ ॥ ३ ॥

दुष्टे कर्मणि प्रवृत्तौ वृद्धादिनिरोधशङ्कया प्रच्छन्नं गूढम् ॥ ४ ॥ ५ ॥

देवयोनिभेदाः पिशाचाः वदनभागे तत्सदृशैरित्यर्थः ॥ ६ ॥

नदनदीपतिः समुद्रस्तं तीर्त्वा ययौ ॥ ७ ॥ ८ ॥ ९ ॥

सशैलं सागरानूपं वीर्य्यवानवलोकयन्।
नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः ॥ ११ ॥
शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः।
विशालैराश्रमपदैर्वेदिमद्भिरलंकृतम् ॥ १२ ॥
कदल्यटविसंशोभं नारिकेलोपशोभितम्।
सालैस्तालैस्तमालैश्च तरुभिश्च सुपुष्पितैः ॥ १३ ॥
अत्यन्तनियताहारैः शोभितं परमर्षिभिः।
नागैः सुपर्णैर्गन्धर्वैः किन्नरैश्च सहस्रशः ॥ १४ ॥
जितकामैश्च सिद्धैश्च चारणैश्चोपशोभितम्।
आजैर्वैखानसैर्माषैर्वालखिल्यैर्मरीचिपैः ॥ १५ ॥
दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम्।
क्रीड़ारतविधिज्ञाभिरप्सरोभिः सहस्रशः ॥ १६ ॥

विद्युत्स्थाने आभरणानि। मेघस्थाने रावणः। बलाकास्थाने छत्रम्। ॥ १० ॥

शैलसहितसागरानूपं तत्कूलं तस्यैव वर्णनं नानापुष्पैरित्यादिना ॥ ११ ॥ १२ ॥

कदल्यटविः कदलीवनं तेन शोभावत् ॥ १३ ॥

अत्यन्तम् अतिशयेन पर्णवातादिरूपो नियतआहारो येषां तैः ॥१४॥

अजो ब्रह्मा तत्पुत्रैर्वैखानसैरयोनिजैः प्रसिद्धैः माषैर्माषसंज्ञकैः ॥ ॥ १५ ॥ १६ ॥

सेवितं देवपत्नीभिः श्रीमतीभिरुपासितम् ।
देवदानवसंघैश्च चरितं त्वमृताशिभिः ॥ १७ ॥
हंसक्रौञ्चप्लवाकीर्णं सारसैः संप्रणादितम् ।
वैदूर्य्यप्रस्तरं स्निग्धं सान्द्रं सागरतेजसा ॥ १८ ॥
पाण्डराणि विशालानि दिव्यमाल्ययुतानि च ।
तूर्य्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९ ॥
तपसा जितलोकानां कामगान्यभिसंपतन् ।
गन्धर्व्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २० ॥
निर्य्यासरसमूलानां चन्दनानां सहस्रशः ।
वनानि पश्यन् सौम्यानि घ्राणतृप्तिकराणि च ॥ २१ ॥
अगुरूणाञ्च मुख्यानां वनान्युपवनानि च ।
तक्कोलानाञ्च जात्यानां फलानाञ्च सुगन्धिनाम् ॥ २२ ॥

अमृताशिभिः अमृतभोजनैः ॥ १७ ॥

प्लवा मण्डूकाः वैदूर्य्यप्रस्तरं वैदूर्य्यसदृशश्यामप्रस्तरं सागरतेजसा सागरोर्म्मिवैभवेन स्निग्धं सान्द्रं शीतलम् ॥ १८ ॥ १९ ॥

अभिसम्पतन् गच्छन् मार्गवशाद्विमानानि गन्धर्वाप्सरसश्च ददर्श ॥२०॥

निर्यासरूपरसयुक्तमूलानां चन्दनानामित्यर्थः । यद्वा निर्यासरसस्य मूलानाम् उपादानकारणानां गुग्गुलादिवृक्षाणां चन्दनानाञ्च वनानि पश्यन् ॥ २१ ॥

पुष्पाणि च तमालस्य गुल्मानि मरिचस्य च ।
मुक्तानाञ्च समूहानि शुष्यमाणानि तीरतः ॥ २३ ॥
शैलानि प्रवरांश्चैव * प्रवालनिचयांस्तथा ।
काञ्चनानि च शृङ्गाणि † राजतानि तथैव च ॥ २४ ॥
प्रस्रवाणि मनोज्ञानि प्रसन्नान्यद्भुतानि च ।
धनधान्योपपन्नानि स्त्रीरत्नैरावृतानि च ॥ २५ ॥
हस्त्यश्वरथगाढ़ानि नगराणि विलोकयन् ।
तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम् ॥ २६ ॥
अनूपे सिन्धुराजस्य ददर्श त्रिदिवोपमम् ।
तत्रापश्यत् स मेघाभं न्यग्रोधं मुनिभिर्वृतम् ॥ २७ ॥
समन्ताद् यस्य ताः शाखाः शतयोजनमायताः ।

जात्यानामुत्तमानां तक्कोलाः सुगन्धफला वृक्षविशेषास्तेषां वनानि पश्यन् ॥ २२ ॥ २३ ॥

शैलानि शिलासमूहान् ॥ २४ ॥

प्रस्रवाणि निर्झराः ॥ २५ ॥

समं समभूतलं देशम् ॥ २६ ॥

तत्र समुद्रानूपे ॥ २७ ॥

यस्य दिव्यवटस्य । प्रसङ्गात्तस्माद्यात्मानं कविराह यस्येति षड्भिः

---

* शंखानां प्रस्तरञ्चैव इति वा पाठः ।

† शैलानि इति वा पाठः ।

यस्य हस्तिनमादाय महाकायश्च कच्छपम्॥ २८॥
भक्षार्थं गरुडः शाखामाजगाम महाबलः।
तस्य तां सहसा शाखां भारेण पतगोत्तमः॥ २९॥
सुपर्णः पर्णबहुलां बभञ्जाथ महाबलः।
तत्र वैखानसा माषा वालखिल्या मरीचिपाः॥ ३०॥
अजा बभूवुर्धूम्राश्च सङ्गताः परमर्षयः।
तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम्॥ ३१॥
भग्नामादाय * वेगेन तौ चोभौ गजकच्छपौ।
एकपादेन धर्मात्मा भक्षयित्वा तदामिषम्॥ ३२॥
निषादविषयं हत्वा शाखया पतगोत्तमः।
प्रहर्षमतुलं लेभे मोक्षयित्वा महामुनीन्॥ ३३॥

श्लोकैः। गरुडोऽमृताहरणप्रस्तावे भक्षार्थं महाकायं गजं कच्छपञ्चादाय क्वचित् स्थित्वा भक्षणाय यस्य शाखां जगाम। गत्वा च यस्य शाखां भारेण बभञ्ज। तस्या भग्नशाखाया अधो वैखानसाद्या अनेके ऋषयः समागता बभूवुस्तेषां शाखापातेन नाशो माभूदिति तां शाखां तौ गजकच्छपौ च महाबलत्वादादायान्यत्र जगाम। गच्छन्नेव तौ शाखां चैकपादेन धृत्वान्तरिक्ष एव तदामिषं गजकच्छपरूपं भक्षयित्वा तया शाखया प्रक्षिप्तया निषादविषयं निषाददेशं हत्वा मुनींश्च वधान्मोक्षयित्वा प्रहर्षं लेभे॥ २८॥ २९॥ ३०॥ ३१॥ ३२॥ ३३॥

* जगामादाय इति वा पाठः।

स तु तेन प्रहर्षेण द्विगुणीकृतविक्रमः।
अमृतानयनार्थं वै चकार मतिमान्मतिम् । ३४ ॥
अयोजालानि निर्मथ्य भित्त्वा रत्नगृहं वरम् ।
महेन्द्रभवनाद् गुप्तमाजहारामृतं ततः॥ ३५ ॥
तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम् ।
नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६ ॥
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ।
ददर्शाश्रममेकान्ते पुण्ये रम्ये वनान्तरे ॥ ३७ ॥
तत्र कृष्णाजिनधरं जटामण्डलधारिणम् ।
ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३८ ॥
स रावणः समागम्य विधिवत्तेन रक्षसा ।
मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥ ३९ ॥
तं स्वयं पूजयित्वा च भोजनेनोदकेन च ।
अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ४० ॥

स तेनैव हर्षेणामिषभक्षणनिषादनाशनमुनिरक्षणजसन्तोषेण ॥३४॥
अयोजालानि अयःशृङ्खलनिर्मितजालानि रत्नमयगेहोपरि पक्षि-प्रवेशपरिहाराय बद्धानि बलान्निर्मथ्य छित्वा रत्नमयगृहञ्च भित्वा गुप्तममृतं महेन्द्रभवनादाजहार ॥ ३५ ॥
सुपर्णेन कृतं भग्नैकमहाशाखत्वरूपं लक्षणं यस्य तम् ॥ ३६ ॥
॥ ३७ ॥ ३८ ॥

कच्चित्ते कुशलं राजन्! लङ्कायां राक्षसेश्वर! ।
केनार्थेन पुनस्त्वं वै तूर्णमेवमिहागतः ॥ ४१ ॥
एवमुक्तो महातेजा मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-मारीचसमागमो नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

सर्वकामैरभिलषितसर्वभोग्यवस्तुभिरर्चितो बभूवेति शेषः ॥३९॥४०॥
पूजोत्तरं कुशलं पृच्छति कच्चिदिति ॥ ४१ ॥
इदम् अग्रिमसर्गे वक्ष्यमाणम् ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

## षट्त्रिंशः सर्गः।



मारीच! श्रूयतां तात! वचनं मम भाषतः।
आर्त्तोऽस्मि मम चार्त्तस्य भवान् हि परमा गतिः॥ १॥
जानीषे त्वं जनस्थानं भ्राता यत्र खरो मम।
दूषणश्च महाबाहुः स्वसा शूर्पणखा च मे॥ २॥
त्रिशिराश्च महाबाहू राक्षसः पिशिताशनः।
अन्ये च बहवः शूरा लब्धलक्षा निशाचराः॥ ३॥
वसन्ति मन्नियोगेन अधिवासञ्च राक्षसाः।
बाधमाना महारण्ये मुनीन् ये धर्मचारिणः॥ ४॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्।

मारीचेति। तातेत्युपलालनं कार्य्यं वदिष्यन् पूर्वं वृत्तं स्मारयति॥ १॥

जानीषे इति। भ्रात्रादयो मन्नियोगाज्जनस्थानं प्राप्य वसन्तीति त्वं जानीषे किलेत्यन्वयः॥ २॥

लब्धलक्षाः लब्धयुद्धोत्साहाः॥ ३॥

अथ तत्र स्थित्वा क्रियमाणं वृत्तञ्च जानीषे इत्याह,—अधिवासञ्चेति। मुनीन् बाधमाना बाधहेतवे हेतौ शानच्। अधिवासञ्च

शूराणां लब्धलक्षाणां खरचित्तानुवर्त्तिनाम् ॥ ५ ॥
ते त्विदानीं जनस्थाने वसमाना महाबलाः।
संगताः परमायत्ता रामेण सह संयुगे ॥ ६ ॥
नानाप्रहरणोपेताः खरप्रमुखराक्षसाः।
तेन सञ्जातरोषेण रामेण रणमूर्धनि। ७ ॥
अनुक्त्वा परुषं किञ्चिच्छरैर्व्यापारितं धनुः।
चतुर्दशसहस्राणि रक्षसामुग्रतेजसाम् ॥ ८ ॥
निहतानि शरैर्दीप्तैर्मानुषेण पदातिना।
खरश्च निहतः संख्ये दूषणश्च निपातितः ॥ ९ ॥
हत्वा त्रिशिरसञ्चापि निर्भया दण्डकाः कृताः।

कुर्वन्ति मन्नियोगादिति शेषः। अधिवास उपद्रव इति कतकः। रतिवासमिति पाठे रतिवासं रत्या प्रीत्या वासो यत्र कर्मणि तथा ॥४॥५॥

चतुर्दशसहस्राणि यानि सन्ति ते त्विदानीमित्यन्वयः। वसमानाः वसन्तः रामेण संयुगे सङ्गताः तेन सह समरमकार्षुरित्यर्थः। परमत्यर्थमायत्ताः सन्नद्धाः ॥ ६ ॥ ७ ॥

किञ्चिदपि परुषमनुक्त्वा शरैः शरमोक्षणव्यापारैर्व्यापारितं सञ्जातव्यापारं कृतम् ॥ ८ ॥ ९ ॥

अथ भगिनीवैरूप्यं निष्कारणं मन्यमानः क्रोधाद्दूषयति रामं मित्रेत्यादिना। क्षीणजीवितः निरपराधं स्त्रीवैरूप्यकरणादेव क्षयात्वं मन्यते ॥ १० ॥

पित्रा निरस्तः क्रुद्धेन सभार्य्यः क्षीणजीवितः ॥ १० ॥
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः।
अशीलः कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ॥ ११ ॥
त्यक्तधर्मा त्वधर्मात्मा भूतानामहिते रतः।
येन वैरं विनारण्ये सत्वमास्थाय केवलम् ॥ १२ ॥
कर्णनासापहारेण भगिनी मे विरूपिता।
तस्य भार्य्यां जनस्थानात् सीतां सुरसुतोपमाम् ॥ १३ ॥
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव।
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ! ॥ १४ ॥
भ्रातृभिश्च सुरान् सर्वान्नाहमत्राभिचिन्तये।
तत् सहायो भव त्वं मे समर्थो ह्यसि राक्षस ! ॥ १५ ॥
वीर्य्ये युद्धे च दर्पे च न ह्यस्ति सदृशस्तव।
उपायतो महाञ्शूरो महामायाविशारदः ॥ १६ ॥
एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर !।

अतएवाशीलोऽजितेन्द्रियश्च अस्थाने क्रोधात् ॥ ११ ॥
सत्वं बलमेव केवलमाश्रित्य न तु धर्मम् ॥ १२ ॥ १३ ॥ १४ ॥
भ्रातृभिः कुम्भकर्णादिभिः नाभिचिन्तये न गणयामि ॥ १५ ॥
उपायतः उपायैश्चित्यर्थः। अत्रैव हेतुगर्भं विशेषणं महामाये-त्यादि ॥ १६ ॥

शृणु तत् कर्म साहाय्ये यत् कार्य्यं वचनान्मम ॥ १७ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतविन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८ ॥
त्वां तु निःसंशयं सीता दृष्ट्वा तु मृगरूपिणम् ।
गृह्यतामिति भर्त्तारं लक्ष्मणञ्चाभिधास्यति ॥ १९ ॥
ततस्तयोरपाये तु शून्ये सीतां यथासुखम् ।
निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २० ॥
ततः पश्चात् सुखं रामे भार्य्याहरणकर्षिते ।
विस्रब्धः प्रहरिष्यामि कृतार्थेनान्तरात्मना ॥ २१ ॥
तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः ।
शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव च ॥ २२ ॥
ओष्ठौ परिलिहन् शुष्कौ नेत्रैरनिमिषैरिव ।
मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३ ॥

मम साहाय्ये यत् कर्म त्वया कार्य्यं तत् कर्म शृण्वित्यन्वयः ॥ १७ ॥
॥ १८ ॥ १९ ॥

अपाये अपगमे ॥ २० ॥

ततः सुखं क्लेशरहितं यथा भवति तथा विस्रब्धं यथा भवति तथा च प्रहरिष्यामि ॥ २१ ॥

रामकथां रामप्रसङ्गं श्रुत्वा मारीचस्त्रस्तो बभूव तेन त्रासेन च तस्य मुखं शुष्कमभवत् ॥ २२ ॥

स रावणस्तत्त्वविषण्णचेता
महावने रामपराक्रमज्ञः।
कृताञ्जलिस्तस्समुवाच वाक्यं
हितञ्च तस्मै हितमात्मनश्च ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-
मारीचसंवादो नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

चिन्तावशादनिमिषैरिव नेत्रैरुपलक्षित इति शेषः। मृतभूतो मृतप्रायः ॥ २१ ॥

आत्मनो हितमित्यार्षी षष्ठी ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः।



तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः।
प्रत्युवाच महातेजा मारीचो राक्षसेश्वरम्॥ १॥
सुलभाः पुरुषा राजन्! सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः॥ २॥
न नूनं बुध्यसे रामं महावीर्य्यं गुणोन्नतम्।
अयुक्तचारश्चपलो महेन्द्रवरुणोपमम्॥ ३॥
अपि स्वस्ति भवेत्तात! सर्वेषामपि रक्षसाम्।

तर्दिति॥ १॥

प्रियवादिनः स्वामिहिताहितविचारमुपेक्ष्य राज्ञ आपातप्रियतया सन्तोषाय तत्कालमधुरवाक्यवक्तारः पुरुषाः सुलभाः। अपि तु अप्रियस्यापि तत्कालमप्रियतया प्रतीयमानस्यापि कालान्तरे पथ्यस्य वचसो वक्ता भृत्यस्तस्य च श्रोतारहितवत् प्रतिभासमानमपि इदं पथ्यमेवेति गृहीता राजा विवेकी दुर्लभः। अतो मयोच्यमानम् आपातत अप्रियमिव भासमानमपि उदर्क परमहितं शृणिवति शेषः॥ २॥

अबोधे हेतुरयुक्तचारत्वम् अनियुक्तचारत्वम्॥ ३॥

अपि रामो न संक्रुद्धः कुर्य्याल्लोकानराक्षसान् ॥ ४ ॥
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तञ्च न भवेद् व्यसनं महत् ॥ ५ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् ।
न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥ ६ ॥
त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७ ॥
न च पित्रा परित्यक्तो नामर्य्यादः कथञ्चन ।
न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ॥ ८ ॥
न च धर्मगुणैर्हीनः कौसल्यानन्दवर्द्धनः ।
न च-तीक्ष्णो हि भूतानां सर्वेषामहिते रतः । ९ ॥

एतदबोधकृतस्य तवानर्थो भावीत्याह,—अपीति । रक्षसां स्वस्त्यार्थम् । अपि स्वस्ति भवेदपि क्षेमं सम्पद्येतापि किं । तव दुर्बुद्धिनिवृत्येति शेषः । तथा संक्रुद्धो रामो लोकमराक्षसं न कुर्य्यादपि किम् । एवमग्रेऽपि बोध्यम् ॥ ४ ॥ ५ ॥ ६ ॥

पापमन्त्रितः सहृत्कृतकर्त्तव्यार्थविचारः ॥ ७ ॥

एवं महावीर्य्यत्वं रामे प्रतिपाद्य रावणोक्तदूषणानि निराचष्टे-न च पित्रेत्यादि ॥ ८ ॥

तैक्ष्ण्याभावे हेतुः सर्वभूतहिते रतत्वम् ॥ ९ ॥

वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् ।
करिष्यामीति धर्मात्मा ततः प्रव्राजितो वनम् ॥ १० ॥
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ।
हित्वा राज्यञ्च भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११ ॥
न रामः कर्कशस्तात ! नाविद्वान्नाजितेन्द्रियः ।
अनृतं न श्रुतञ्चैव नैवं त्वं वक्तुमर्हसि ॥ १२ ॥
रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानामिव वासवः ॥ १३ ॥
कथं तु तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥
शरार्चिषमनाधृष्यञ्चापखड्गेन्धनं रणे ।
रामाग्निं सहसा दीप्तं न प्रविष्टुं त्वमर्हसि ॥ १५ ॥

कैकेय्या वञ्चितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्यामीति वनं स्वयमेव प्रव्रजितो न तु किञ्चित् पापात् पित्रा प्रवासित इत्यर्थः ॥ १० ॥

कैकेय्याः प्रियस्य कामस्य मनोरथस्य पूर्णार्थम् ॥ ११ ॥

अनृतं न श्रुतञ्चैव अनृतप्रसङ्गमपि न जानाति तेन तत्कथनं दूरापास्तमित्यर्थः । एवं वक्तुं रामं दुर्गुणं वक्तुम् ॥ १२ ॥ १३ ॥

अथ सीतापहारस्याशक्यत्वमाह,—कथं त्विति । स्वेन तेजसा पातिव्रत्यवैभवेन किञ्च तस्य रामस्य स्वेन तेजसा सहजप्रतापेनेत्यर्थः ॥१४॥

धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणम् ।
चापबाणधरं तीक्ष्णं शत्रुसेनापहारिणम् ॥ १६ ॥
राज्यं सुखञ्च सन्त्यज्य जीवितं चेष्टमात्मनः ।
नात्यासादयितुं तात ! रामान्तकमिहार्हसि ॥ १७ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १८ ॥
तस्य सा नरसिंहस्य सिंहोरस्कस्य भामिनी ।
प्राणेभ्योऽपि प्रियतरा भार्य्या नित्यमनुव्रता ॥ १९ ॥
न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया ।

शरार्चिषं शरज्वालम् । खड्गचापपदेन तद्गतशरवक्तद्रूपमिन्धनं यस्य ॥ १५ ॥

रामेऽन्तकरूपकोपपादकविशेषणान्याह,—धनुरिति । धनुरेव व्यादितं व्यात्तमिति यावत् दीप्तं ज्वालादीप्तमास्यं यस्य रामरूपान्तकस्य ज्वालादीप्तत्वमेव शरार्चिषमित्यनेनोक्तम् ॥ १६ ॥

अत्यासादयितुमत्यन्तं प्राप्तुम् ॥ १७ ॥

अप्रमेयं हि तत्तेज इत्यनेनावाङ्मनसगोचरत्वं ध्वनितं यस्य सेत्यनेन तस्या अपि तत्त्वं सूचितम् ॥ १८ ॥

नरसिंहस्येत्यनेन हिरण्यकशिपुप्रभृतिहन्ताऽयमेवेति सूचितम् । नित्यमनुव्रतेत्यनेन तस्यास्तच्छक्तित्वं सूचितम् ॥ १९ ॥

दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २० ॥
किमुद्यमं व्यर्थमिमं कृत्वा ते राक्षसाधिप! ।
दृष्टश्चेत्तु रणे तेन तदन्तं तव जीवितम् ॥ २१ ॥
जीवितञ्च सुखञ्चैव राज्यञ्चैव सुदुर्लभम् ।
स सर्वैः सचिवैः सार्द्धं विभीषणपुरस्कृतैः ॥ २२ ॥
मन्त्रयित्वा सधर्मिष्ठं कृत्वा निश्चयमात्मनः ।
दोषाणाञ्च गुणानाञ्च सम्प्रधार्य्य बलाबलम् ॥ २३ ॥
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ।
हितं हि तत्र निश्चित्य क्षमं त्वं कर्त्तुमर्हसि ॥ २४ ॥

अहं तु मन्ये तव न क्षमं रणे
समागमं कोसलराजसूनुना ।

न सेति रजस्तमःप्रधानेन त्वादृशेनेत्यर्थः ॥ २० ॥

व्यर्थमिममुद्यमं कृत्वा ते न किमपि हितमित्यर्थः । तेन चेत्त्वं रणे दृष्टस्तदा तदन्तं तद्दर्शनावसानं तव जीवितमित्यर्थः ॥ २१ ॥

जीवितमिति । जीविताद्युद्दिश्य स त्वं विभीषणपुरोगमैर्धर्मिष्ठै-र्मन्त्रयित्वा अनन्तरं निश्चयं कृत्वा दोषगुणबलाबलनिर्धारणविषयम् आत्मनो रामस्य च दोषगुणबलाबलं सम्प्रधार्य्य विचार्य्य तदनन्तरं स्वस्य रामस्य च बलं तत्त्वतो ज्ञात्वा निश्चित्य तव आत्मनो हितमिद-मिति निश्चित्य यत्क्षमं तत् कर्त्तुमर्हसीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥

इदं हि भूयः शृणु वाक्यमुत्तमं
क्षमख युक्तञ्च निशाचराधिप ! ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-
मारीचसंवादो नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

सत्सचिवान्तर्गतस्य मम त्वेष निश्चय इत्याह,—अहं त्विति । इदं वक्ष्यमाणम् ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः ।

कदाचिदप्यहं वीर्य्यात् पर्य्यटन् पृथिवीमिमाम् ।
बलं नागसहस्रस्य धारयन् पर्वतोपमः ॥ १ ॥
नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः ।
भयं लोकस्य जनयन् किरीटी परिघायुधः ॥ २ ॥
व्यचरं दण्डकारण्यमृषिमांसानि भक्षयन् ।
विश्वामित्रोऽथ धर्मात्मा मद्वित्रस्तो महामुनिः ॥ ३ ॥
स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत् ।
अद्य रक्षतु मां रामः पर्वकाले समाहितः ॥ ४ ॥
मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर ! ।
इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा ॥ ५ ॥
प्रत्युवाच महाभागं विश्वामित्रं महामुनिम् ।

अथ स्वानुभवसिद्धं रामबलमाह,—कदाचिदित्यादि । अहमपीति सम्बन्धः ॥ १ ॥ २ ॥

मद्वित्रस्तः मत्तो वित्रस्त इत्यर्थः ॥ ३ ॥

पर्वकाले यागकाले ॥ ४ ॥ ५ ॥

ऊनषोडशवर्षोऽयमकृतास्त्रश्च राघवः ॥ ६ ॥
कामं तु मम तत्सैन्यं मया सह गमिष्यति ।
बलेन चतुरङ्गेण स्वयमेत्य निशाचरम् ॥ ७ ॥
वधिष्यामि * मुनिश्रेष्ठ ! शत्रुं तव यथेप्सितम् ।
एवमुक्तः स तु मुनी राजानमिदमब्रवीत् ॥ ८ ॥
रामान्नान्यद् बलं लोके पर्य्याप्तं तस्य रक्षसः ।
देवतानामपि भवान् समरेष्वभिपालकः ॥ ९ ॥
आसीत्तव कृतं कर्म त्रिलोकविदितं नृप ! ।
काममस्ति महत् सैन्यं तिष्ठत्विह परन्तप ! † ॥ १० ॥
बालोऽप्येष महातेजाः समर्थस्तस्य निग्रहे ।
गमिष्ये राममादाय स्वस्ति तेऽस्तु परन्तप ! ॥ ११ ॥

पञ्चदशवर्षोऽपि तथा दशरथेनानुदितोऽप्यत्यन्तबालद्योतनाय अति-बालेनापीदृशं कृतं किमधुना वाच्यमिति रावणस्यात्यन्तभयाय मारी-चेन तथा दशरथेनोक्त इत्यूनषोडशवर्ष इत्युक्तम् । ऊनषोड़शवर्षोऽय-मिति पाठान्तरम् ॥ ६ ॥ ७ ॥ ८ ॥

यद्यपि भवान् देवानामपि सहायकृत् आसीत् । अन्यच्च तव त्वया कृतं कर्म त्रिलोकविदितं त्रिषु लोकेषु विदितं तथापि रामादन्यद् बलं

* विधमिष्ये इति वा पाठः ।

† काममस्तु मम श्रीमान् पद्मपत्रनिभेक्षणः । इति वा पाठः ।

इत्येवमुक्त्वा स मुनिस्तमादाय नृपात्मजम्।
जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम्॥ १२॥
तं तदा दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितम्।
बभूवोपस्थितो रामश्चित्रं * विस्फारयन् धनुः॥ १३॥
अजातव्यञ्जनः श्रीमान् बालः श्यामः शुभेक्षणः।
एकवस्त्रधरो धन्वी शिखी कनकमालया॥ १४॥
शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा।
अदृश्यत तदा रामो बालचन्द्र इवोदितः॥ १५॥
ततोऽहं मेघसङ्काशस्तप्तकाञ्चनकुण्डलः।
बली दत्तवरो दर्पादाजगामाश्रमान्तरम्॥ १६॥

तस्य रक्षसो न पर्याप्तमतः कामं तव बलं यदस्ति तदत्रैव तिष्ठतु तदुपयोगाभावात्। अत एव बालोऽपि यतस्तन्निग्रहसमर्थोऽतो देय एवेति शेषः॥ ९॥ १०॥ ११॥ १२॥

उपस्थितो रामः तद्रक्षणार्थं समीपं प्राप्तः सन्॥ १३॥

अजातव्यञ्जनः श्मश्र्वादिपुंस्त्वचिह्नप्रादुर्भावहीन इत्यर्थः। एकवस्त्रधरः ब्रह्मचर्य्ये स्थितः शिखी काकपक्षधरः कनकमालयोपलक्षितः॥ ॥ १४॥ १५॥

आजगामेत्युत्तमपुरुषः। अत्र पारोक्ष्यार्थकलिटा दैवपारवश्या-

* मञ्जुम् इति वा पाठः।

तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः।
मां तु दृष्ट्वा धनुः सज्यमसम्भ्रान्तश्चकार ह॥ १७॥
अवजानन्नहम्मोहाद् बालोऽयमिति राघवम्।
विश्वामित्रस्य तां वेदिमभ्यधावं कृतत्वरः॥ १८॥
तेन मुक्तस्ततो बाणः शितः शत्रुनिबर्हणः।
तेनाहं ताड़ितः क्षिप्तः समुद्रे शतयोजने॥ १९॥
नेच्छता तात! मां हन्तुं तदा वीरेण रक्षितः।
रामस्य शरवेगेन निरस्तो भ्रान्तचेतनः॥ २०॥
पातितोऽहं तदा तेन गम्भीरे सागराम्भसि।
प्राप्य संज्ञां चिरात्तात! लङ्कां प्रतिगतः पुरीम्॥ २१॥
एवमस्मि तदा मुक्तः सहायास्ते निपातिताः।
अकृतास्त्रेण रामेण बालेनाक्लिष्टकर्मणा॥ २२॥
तन्मया वार्य्यमाणस्तु यदि रामेण विग्रहम्।

देवाहमागतो न तु तदागमनं मम प्रत्यक्षमिति ध्वनयति। यद्वा बहु-कालिकत्वेन विस्मृतत्वाद्वा तत्त्वारोपः। आर्षो वा लिट्। आश्रमा-न्तरम् आश्रममध्यं दत्तवरो ब्रह्मदत्तदेवावध्यत्ववरः॥ १६॥

प्रविष्टोऽहं तेन दृष्ट इत्यन्वयः॥ १७॥ १८॥

शतयोजने तटात्तत्पर्य्यन्तदूरप्रस्थिते समुद्रे क्षिप्तः॥ १९॥

नेच्छता अनिच्छता एतच्च रक्षणं केवलं कृपाजन्यमिति मारीचा-शयः। भाविकार्य्यार्थमिति वस्तुतत्त्वम्॥ २०॥ २१॥

करिष्यस्यापदं घोरां चिप्रं माच्य नशिष्यसि ॥ २३ ॥
क्रीड़ारतिविधिज्ञानां समाजोत्सवदर्शिनाम्।
रचसाञ्चैव सन्तापमनर्थञ्चाहरिष्यसि ॥ २४ ॥
हर्म्यप्रासादसम्बाधां नानारत्नविभूषिताम्।
द्रच्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५ ॥
अकुर्वतोऽपि पापानि शुचयः पापसंश्रयात्।
परपापैर्विनश्यन्ति मत्स्या नागहृदे यथा ॥ २६ ॥
दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान्।
द्रच्यस्यभिहतान् भूमौ तव दोषात्तु राचसान् ॥ २७ ॥
हृतदारान् सदारांश्च दश विद्रवतो दिशः।
हतशेषानशरणान् द्रच्यसि त्वं निशाचरान् ॥ २८ ॥
शरजालपरिचिप्तामग्निज्वालासमावृताम्।
प्रदग्धभवनां लङ्कां द्रच्यसि त्वमसंशयम् ॥ २९ ॥

ये मे सहाया अपरे गतास्ते निपातिता इत्यन्वयः ॥ २२ ॥ २३ ॥

अनर्थं मरणरूपम् आहरिष्यसि यत्नात् सम्पादयिष्यसि ॥२४॥२५॥

सङ्गदोषादन्यः कुलमात्रस्य नाशः प्राप्नोतीत्याह,—अकुर्वतोऽपीति। परपापैः परेषां पापात्मनां पापैर्निमित्तैः नागह्रदे सर्पयुतह्रदे सर्पनिग्रहाय प्रविष्टेन राजप्रेरितधीवरादिना गरुड़ेन वा यथा प्रसङ्गान्मत्स्या नश्यन्ति तद्वत् ॥ २६ ॥ २७ ॥

हृतदारान् परिहृतदारान् त्यक्तदारानिति यावत् ॥ २८ ॥ २९ ॥

परदाराभिमर्षात्तु नान्यत् पापतरं महत् ।
प्रमदानां सहस्राणि तव राजन्! परिग्रहे ॥ २० ॥
भव स्वदारनिरतः स्वकुलं रक्ष राक्षसाम् ।
मानं वृद्धिञ्च राज्यञ्च जीवितं चेष्टमात्मनः ॥ २१ ॥
कलत्राणि च सौम्यानि मित्रवर्गं तथैव च ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ २२ ॥

निवार्य्यमाणः सुहृदा मया भृशं
प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवो
यमक्षयं रामशरात्तजीवितः ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-
मारीचसंवादो नाम अष्टात्रिंशः सर्गः ॥ ३८ ॥

तव परिग्रहेऽन्तःपुरे प्रमदानां सहस्राणि अतस्तास्वेव रमस्व । नान्यत्र मनोधेहीत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

# एकोनचत्वारिंशः सर्गः



एवमस्मि तदा मुक्तः कथञ्चित्तेन संयुगे।
इदानीमपि यद्वृत्तं तच्छृणुष्व यदुत्तरम् ॥ १ ॥
राक्षसाभ्यामहं द्वाभ्या*मनिर्विण्णस्तथा कृतः।
सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावने ॥ २ ॥
दीप्तजिह्वो महादंष्ट्रस्तीक्ष्णशृङ्गो महाबलः।
व्यचरन् दण्डकारण्यं मांसभक्षो महामृगः ॥ ३ ॥
अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण!।
अत्यन्तघोरो व्यचरंस्तापसांस्तान् प्रधर्षयन् ॥ ४ ॥

पुनः स्वानुभवसिद्धं रामवृत्तमाह,—एवमिति। तदा विश्वामित्र-यज्ञरक्षणसमये तेन कथञ्चिन्मुक्तोऽस्मि। इदानीं प्रौढावस्थायामपि यद्वृत्तं मद्विषयं यदुत्तरं यत् सर्वलोकोत्तरं तदतिरिक्तासाध्यं तच्छृणुष्व श्रुत्वा अवगच्छ यावत् ॥ १ ॥

पूर्वं तथाकृतः प्राणसङ्कटं प्रापितोऽप्यहमनिर्विण्णः अप्राप्ततद्विषय-प्रवृत्तिवैराग्यः ताभ्यां मृगरूपाभ्यां सहितोऽहमपि मृगरूपः सन् प्रविष्ट इत्यन्वयः ॥ २ ॥

---

* समेताभ्याम् इति वा पाठः।

निहत्य दण्डकारण्ये तापसान् धर्मचारिणः ।
रुधिराणि पिबंस्तेषां तन्मांसानि च भक्षयन् ॥ ५ ॥
ऋषिमांसाशनः क्रूरस्त्रासयन् वनगोचरान् ।
तदा रुधिरमत्तोऽहं व्यचरं दण्डकावनम् ॥ ६ ॥
तदाहं दण्डकारण्ये व्यचरन् धर्मदूषकः ।
आसादयं तदा रामं तापसं धर्ममाश्रितम् ॥ ७ ॥
वैदेहीञ्च महाभागां लक्ष्मणञ्च महारथम् ।
तापसं नियताहारं सर्वभूतहिते रतम् ॥ ८ ॥
सोऽहं वनगतं रामं परिभूय महाबलम् ।
तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ॥ ९ ॥
अभ्यधावं सुसंक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः ।
जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् ॥ १० ॥
तेन त्यक्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः ।
विकृष्य सुमहच्चापं सुपर्णानिलतुल्यगाः * ॥ ११ ॥

तदेवाह,—दीप्तेति ॥ ३ ॥ ४ ॥ ५ ॥
वनगोचरान्मुनीनन्यजीवांश्च ॥ ६ ॥
आसादयं प्राप्तवान् । तापसं धर्मं तापससम्बन्धिधर्ममाश्रितम् ॥ ॥ ७ ॥ ८ ॥ ९ ॥

---

* सुपर्णानिलनिस्वनाः इति वा पाठः ।

ते बाणा वज्रसंकाशाः सुघोरा रक्तभोजनाः ।
आजग्मुः सहिताः सर्वे त्रयः सन्नतपर्वणः ॥ १२ ॥
पराक्रमज्ञो रामस्य शठो दृष्टभयः पुरा ।
समुत्क्रान्त*स्ततो मुक्तस्तावुभौ राक्षसौ हतौ ॥ १३ ॥
शरेण मुक्तो रामस्य कथञ्चित् प्राप्य जीवितम् ।
इह प्रव्राजितो युक्तस्तापसोऽहं समाहितः ॥ १४ ॥
वृक्षे वृक्षे हि पश्यामि चीरकृष्णाजिनाम्बरम् ।
गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥ १५ ॥
अपि रामसहस्राणि भीतः पश्यामि रावण ! ।
रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ १६ ॥
राममेव हि पश्यामि रहिते राक्षसेश्वर ! ।

अकृतप्रज्ञः अकृतविचारः तं प्रहारं पूर्वं रामदत्तप्रहारम् ॥१०॥११
सन्नतपर्वणः अदीर्घत्वमाघम् ॥ १२ ॥
शठो गूढविप्रियकारी दृष्टभयः रामादिति शेषः। समुत्क्रान्तः पलायितः ॥ १३ ॥
प्रव्राजितः परिव्राजितः कृतसकलदुर्वृत्तपरित्यागः युक्तो योगाभ्यासरतः अतएव तापसस्तपोनिष्ठः समाहितः स्थिरान्तःकरणः ॥ १४ ॥
॥ १५ ॥ १६ ॥

---

* समुद्भ्रान्तः इति वा पाठः ।

दृष्ट्वा स्वप्नगतं राममुद्भ्रमामीव चेतनः ॥ १७ ॥
रकारादीनि नामानि रामत्रस्तस्य रावण ! ।
रत्नानि च रथाश्चैव संत्रासं जनयन्ति मे ॥ १८ ॥
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् ।
बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ॥ १९ ॥
रणे रामेण युध्यस्व क्षमां वा कुरु रावण ! * ।
न ते रामकथा कार्य्या यदि मां द्रष्टुमिच्छसि ॥ २० ॥

रहिते रामरहितेऽपि वने उद्भ्रमामि भीतो भवामि इव चेतनः सुषुप्तो नष्टचैतन्योऽपि तद्दर्शनवशाल्लब्धचैतन्यः प्रलपामीत्यर्थः ॥ १७ ॥

रकारादीनीति । एवञ्च साक्षाद्दर्शने यस्त्रासः स वक्तुमशक्य इति भावः । तन्नामैकदेशसत्तावदपि नाम भयजनकं किं वक्तव्यं सम्पूर्ण-तन्नाम्नो भयजनकत्वमिति । स्थाने हृषीकेश तव प्रकीर्त्येति गीताश्लोका-र्थोऽत्र व्यङ्ग्यः ॥ १८ ॥ १९ ॥

तस्माद्रामेण रणे युध्यस्व एतदुचितं न तु तद्दारापहार उचितः सर्वकुलनाशकत्वात् युद्धे एकस्यैव नाशादिति भावः । मुख्यपक्षमाह, क्षमां वेति । यदि मां जीवन्तं द्रष्टुमिच्छसि तदा रामकथा न कार्या तत्कथाया रक्षस्तेजोपहारत्वादुभयोरपि तेजोनाशे मरणादप्यधिका दुःखावस्थेति भावः ॥ २० ॥

---

* न क्षमं कुरु राक्षस ! इति वा पाठः ।

बहवः साधवो लोके युक्ताधर्ममनुष्ठिताः।
परेषामपराधेन विनष्टाः सपरिच्छदाः॥ २१॥
सोऽहं तवापराधेन विनश्येयं निशाचर!।
कुरु यत्ते क्षमं तत्त्वमहं त्वां नानुयामि वै॥ २२॥
रामस्य हि महातेजा महासत्वो महाबलः।
अपि राक्षसलोकस्य भवेदन्तकरोऽपि हि॥ २३॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः।
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा।
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः॥ २४॥

साधवः अकृतपरापचाराः। युक्ता योगवन्तः। अनुष्ठिता इति-कर्त्तरि निष्ठा॥ २१॥

परापराधेन तवापराधेनेत्यर्थः। विनश्येयं विनशिष्यामि। अतः हे राक्षस यत्ते क्षमं रणः क्षमा वा तत्त्वमेव कुरु। अहं तु त्वां नानु-यामि त्वद्बुद्धिं नानुगच्छामीत्यर्थः॥ २२॥

तत्र हेतुमाह,—रामस्य हीति। तेजः पराक्रमः सत्वं बुद्धिबलं बलं शारीरं हि यतो महातेजस्त्वादिगुणो रामः प्रसिद्धोऽत ईदृशो रामः राक्षसलोकस्यान्तकरः हि निश्चयेन भवेदिति अपि संभाव्यते अतो नानुयामि त्वद्बुद्धिम्। सकलराक्षसकुलनाशभियेति भावः॥ २३॥

खरादिनाशस्य तत्कृतान्यायमूलत्वात् तत्र क्षमैव युक्तेत्याह,— यदीति। सीताहननप्रयत्नदोषविरूपितशूर्पणखाहेतोरतिवृत्तः क्रूरमव-

इदं वचो बन्धुहितार्थिना मया
यथोच्यमानं यदि नाभिपत्स्यसे ।
सबान्धवस्त्यक्ष्यसि जीवितं रणे
हतोऽद्य रामेण शरैरजिह्मगैः ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-
मारीचसंवादो नाम एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

स्थितेन रामेण यदि शूर्पणखावाक्यजनितरोषात् स्वयं योद्धुं गतो रामेण हतस्तदा को रामस्य व्यतिक्रमोऽन्यायस्तत्त्वमेव ब्रूहि ॥ २४ ॥

सिद्धान्तमाह,—इदमिति । यथोच्यमानं परमार्थत उच्यमानं यदि नाभिपत्स्यसे नाङ्गीकरिष्यसि तदा रणे हतः सबान्धवस्त्वं जीवितं त्यक्ष्यसि इति मया अद्यैव निश्चीयते ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

# चत्वारिंशः सर्गः ।



मारीचस्य तु तद्वाक्यं क्षमं युक्तञ्च रावणः ।
उक्तो न प्रतिजग्राह मर्त्तुकाम इवौषधम् ॥ १ ॥
तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः ।
अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥
दुष्कुलैतदयुक्तार्थं मारीच ! मयि कथ्यते ।
वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोषरे ॥ ३ ॥
त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे ।
मूर्खस्य पापशीलस्य मानुषस्य विशेषतः ॥ ४ ॥

मारीचस्य मारीचेन क्षमं निवृत्तिसमर्थं युक्तं न्याय्यं कालोचितञ्च वाक्यमुक्त उपदिष्टो रावणो मुमूर्षुरौषधमिव तदुक्तं न प्रतिजग्राह ॥ १ ॥ २ ॥

शत्रोर्मानुषस्य स्तावकत्वात् क्रोधेनाह,—दुष्कुलेति । अयुक्तार्थं राजचित्तप्रतिकूलत्वादयुक्तार्थं निष्फलं तमोगुणाक्रान्ते मम हृदये तस्यानवकाशात् ॥ ३ ॥

संयुगे पापशीलत्वादिगुणकस्य स्त्रीताटकाहन्तृत्वात् रामस्य भार्य्याहरणविषये स्थितं मां तद्वाक्यैर्भेत्तुं निवर्त्तयितुं न शक्यमित्यर्थः । मामिति द्वितीया छान्दसत्वात् ॥ ४ ॥

यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः॥ ५॥
अवश्यं तु मया तस्य संयुगे खरघातिनः।
प्राणैः प्रियतरा सीता हर्त्तव्या तव सन्निधौ॥ ६॥
एवं मे निश्चिता बुद्धिर्हृदि मारीच! विद्यते।
न व्यावर्त्तयितुं शक्या सेन्द्रैरपि सुरासुरैः॥ ७॥
दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि।
अपायं वा उपायं वा कार्य्यस्यास्य विनिश्चये॥ ८॥
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता।
उद्यताञ्जलिना राज्ञो य इच्छेद् भूतिमात्मनः॥ ९॥

तत्र मूर्खत्वमुपपादयति,—य इति। प्राकृतमसारं स्त्री कैकेयी। एकपदे झाक्॥ ५॥

संयुगे खरहन्तुरित्यन्वयः॥ ६। ७॥

अपि चापृष्टोत्तरप्रलापस्तवासङ्गत इत्याह,—दोषगुणं वेति। कस्यचित् सन्दिग्धस्य कार्य्यस्य निश्चये निश्चयसिद्ध्यर्थम् अत्रानुष्ठिते को गुणः को दोषः क उपायः कोऽपाय इति यदि पृष्टः स्यात्तदा एवं वक्तुमर्हसि गुणदोषादिकमित्यर्थः। मया तु निश्चिते कार्य्ये केवलं साहाय्ये नियुज्यसेऽतो न ते अयः सङ्गत इति भावः॥ ८॥

पृष्टोत्तरमेव राजनि सचिवेन विनीतेन वाच्यमित्याह,—संपृष्टेनेति। उद्यताञ्जलिनेत्यनेन विनीतता दर्शिता॥ ९॥

वाक्यमप्रतिकूलन्तु मृदुपूर्वं शुभं हितम्।
उपचारेण वक्तव्यो युक्तञ्च वसुधाधिपः॥ १०॥
सावमर्दन्तु यद्वाक्यमथवा हितमुच्यते।
नाभिनन्देत तद्राजा मानार्थी मानवर्जितम्॥ ११॥
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः।
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च॥ १२॥
औष्ण्यं तथा विक्रमञ्च सौम्यं दण्डं प्रसन्नताम्।
धारयन्ति महात्मानो राजानः क्षणदाचर!॥ १३॥
तस्मात् सर्वास्ववस्थासु मान्याः पूज्याश्च नित्यदा।
त्वं तु धर्ममविज्ञाय केवलं मोहमाश्रितः॥ १४॥
अभ्यागतं तु दौरात्म्यात् परुषं वदसीदृशम्।

उपचारेण राजनीत्युक्तमार्गेण युक्तम्॥ १०॥

सावमर्दन्तु राजस्थावमर्दसहितम्। अथवा यद्यप्यर्थे यद्यपि हितं तथापि नाभिनन्देत। त्वं त्वष्टष्ट एव ममाहितमवमर्दसहितं मानहीनं वदसीत्यनुचितमिति भावः॥ ११॥

ततो वक्तुरनिष्टमपीत्याह,—पञ्चेति। के पञ्चेत्यपाह, अग्नेरिति॥१२॥

कानि रूपाणि तत्राह, क्रमेण। औष्ण्यमिति। औष्ण्यं तैक्ष्ण्यं सौम्यं दयार्द्रचित्तत्वं दण्डं दुष्टनिग्रहम्। एवञ्च तादृशे वक्तरि तीक्ष्णदण्डपात इत्याशयः॥ १३॥

धर्मं राजधर्मम्॥ १४॥

गुणदोषौ न पृच्छामि चमस्त्वात्मनि राचस ! ॥ १५ ॥
मयोक्तमपि चैतावत् त्वां प्रत्यमितविक्रम ! ।
अस्मिंस्तु स भवान् कृत्ये साहाय्यं कर्तुमर्हसि ॥ १६ ॥
शृणु तत् कर्मसाहाय्ये यत् कार्य्यं वचनान्मम ।
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ १७ ॥
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ।
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ १८ ॥
त्वां हि मायामयं दृष्ट्वा काञ्चनं जातविस्मया ।
आनयैनमिति चिप्रं रामं वक्ष्यति मैथिली ॥ १९ ॥
अपक्रान्ते च काकुत्स्थे दूरं गत्वाप्युदाहर ।
हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ २० ॥
तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः ।

अभ्यागतमतिथिमित्यनेन पूज्यत्वातिशयं सूचयति । गुणदोषप्रश्ने किं मम हितमिति प्रश्ने वा इदृशं वक्तुं युक्तं नचैतदेकमपि मया पृष्टमिति भावः ॥ १५ ॥

अपि च अपि तु मया त्वां प्रति एतावदेवोक्तम् । किं तत्राह, अस्मिन् सीतापहाररूपे कृत्ये स भवान् मया नियुक्तः साहाय्यं कर्तुमर्हसीति ॥ १६ ॥

किं तन्मत्कर्त्तव्यं साहाय्यं तत्राह,—शृणिवति । साहाय्ये मम वचनात् यत् कार्य्यं तत् कर्म शृणु इति सम्बन्धः ॥ १७ ॥ १८ ॥ १९ ॥

अनुगच्छति संभ्रान्तं सौमित्रिरपि सौहृदात् ॥ २१ ॥
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम्।
आहरिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २२ ॥
एवं कृत्वा त्विदं कार्य्यं यथेष्टं गच्छ राक्षस!।
राज्यस्यार्द्धं प्रदास्यामि मारीच! तव सुव्रत! ॥ २३ ॥
गच्छ सौम्य! शिवं मार्गं कार्य्यस्यास्य विवृद्धये।
अहं त्वानुगमिष्यामि सरथो दण्डकावनम् ॥ २४ ॥
प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम्।
लङ्कां प्रतिगमिष्यामि कृतकार्य्यः सह त्वया ॥ २५ ॥
नोचेत् करोषि मारीच! हन्मि त्वामहमद्य वै।
एतत् कार्य्यमवश्यं मे बलादपि करिष्यसि।
राज्ञो विप्रतिकूलस्थो न जातु सुखमेधते ॥ २६ ॥

आसाद्य तं जीवितसंशयस्ते
मृत्युर्ध्रुवो ह्यद्य मया विरुध्य।

रामवाक्यानुरूपकं रामध्वनिसदृशध्वनियुक्तम् ॥२०॥२१॥२२॥२३॥

शिवं मार्गं गच्छ सौम्यो भूत्वा प्रस्थितो भवेत्यर्थः। किञ्च शिवं मनोहरं मार्गं मृगरूपं गच्छ प्राप्नुहि ॥ २४ ॥ २५ ॥

अथ राजत्वात् स्ववाक्याकरणे दण्डमाह,—नोचेदिति। मद्वचना-ननुष्ठाने मरणमेवानुष्ठाने तु जीवनं मत्तो बहुधनादिप्राप्तिश्च। एवं प्रार्थनया अकरणे बलात् मद्वधहेतुकमरणभयाच्च करिष्यस्येव ॥२६॥

एतद्‌ यथावत्‌ परिगण्य बुद्ध्या
यदत्र पथ्यं कुरु तत्तथा त्वम्‌ ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-
मारीचसंवादो नाम चत्वारिंश सर्गः ॥ ४० ॥

रामात्पर्य्यायद्वये इव कदाचिज्जीवनं सम्भाव्यत एव मद्वचनाकरणे तु सर्वथाऽचम्त्युरेवेत्याह,—आसाद्येति। तं रामं संशयो न तु नाश-निश्चयः। एतन्मदुक्तवचनम्‌ ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ।



आज्ञप्तो रावणेनेत्थं प्रतिकूलञ्च राजवत् ।
अब्रवीत् परुषं वाक्यं निःशङ्को राक्षसाधिपम् ॥ १ ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ।
सपुत्रस्य सराज्यस्य सामात्यस्य निशाचर ! ॥ २ ॥
कस्त्वया सुखिना राजन् ! नाभिनन्दति पापकृत् * ।
केनेदमुपदिष्टन्ते मृत्युद्वारमुपायतः ॥ ३ ॥
शत्रवस्तव सुव्यक्तं हीनवीर्य्या निशाचर ! ।
इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४ ॥

राजवद्राजयोग्यं रावणेनाज्ञप्तः रामलक्ष्मणप्रतारणरूपं कार्य्यं प्रतिकूलम् अन्यथा वधं करिष्यामीत्येवं प्रतिकूलवाक्यसहितं यथाज्ञप्तो मृत्योर्निःशङ्को मारीचः परुषं शब्दतोऽर्थतश्च वाक्यमब्रवीत् ॥ १ ॥

विनाशः विनाशोपायः ॥ २ ॥

सुखिना त्वया सहावस्थानमिति शेषः । को नाभिनन्दति । केन पापकृता उपायतः उपायव्याजेन ॥ ३ ॥

तथोपदेष्टारस्तवत्तो हीनवीर्य्यास्तव शत्रवः । ये त्वां त्वत्तो बलवत्तरेण शत्रुणोपरुद्धं विनश्यन्तं द्रष्टुमिच्छन्ति ॥ ४ ॥

---

* निन्दितः इति वा पाठः ।

केनेदमुपदिष्टन्ते क्षुद्रेणाहितबुद्धिना।
यस्त्वामिच्छति नश्यन्तं स्वकृतेन निशाचर! ॥ ५ ॥
वध्याः खलु न वध्यन्ते सचिवास्तव रावण!।
ये त्वामुत्पथमारूढ़ं न निगृह्णन्ति सर्वशः ॥ ६ ॥
अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः।
निग्राह्यः सर्वथा सद्भिः न निग्राह्यो निगृह्यसे ॥ ७ ॥
धर्ममर्थञ्च कामञ्च यशश्च जयतां वर!।
स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर! ॥ ८ ॥
विपर्य्यये तु तत्सर्वं व्यर्थं भवति रावण!।
व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ९ ॥
राजमूलो हि धर्मश्च यशश्च जयतां वर!।
तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥
राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर!।

स्वकृतेन स्वनिर्मितविनाशोपायेन ॥ ५ ॥

ये त्वामेवं कुपथमारूढ़ं न निगृह्णन्ति न वारयन्ति अमात्यास्ते वध्या वधयोग्याः कुतस्त्वया न वध्यन्त इत्यर्थः ॥ ६ ॥

तत्र नीतिशास्त्रमाह,—अमात्यैरिति ॥ ७ ॥

कुतस्तैरेवमनुष्ठेयं तत्राह, धर्ममिति ॥ ८ ॥

विपर्य्यये स्वामिवैगुण्ये तत्र न केवलं तेषामेव व्यसनप्राप्तिः किं तु सर्वजनानां तदाह, इतरे जना इति अपीति शेषः ॥ ९ ॥ १० ॥

न चातिप्रतिकूलेन नाविनीतेन राक्षस! ॥ ११ ॥
ये तीक्ष्णमन्त्राः सचिवा भुज्यन्ते सह तेन वै।
विषमेषु रथाः शीघ्रं मन्दसारथयो यथा ॥ १२ ॥
बहवः साधवो लोके युक्तधर्ममनुष्ठिताः।
परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १३ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण!।
रक्ष्यमाणा न वर्धन्ते मृगा गोमायुना यथा ॥ १४ ॥
अवश्यं विनशिष्यन्ति सर्वे रावण! राक्षसाः।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १५ ॥
तदिदं काकतालीयं घोरमासादितं मया।

तीक्ष्णेन क्रूरदण्डेन प्रतिकूलेन स्वप्रकृतीनामिति शेषः ॥ ११ ॥

तीक्ष्णमन्त्रास्तीक्ष्णोपायप्रयोक्तारस्तेन तन्मन्त्रग्राहिणा राज्ञा सह भुज्यन्ते स्वसमतया स्थाप्यन्ते। मन्दो मन्दबुद्धिः सारथिर्येषां ते रथा यथा विषमे सारथिभिः सह नश्यन्ति तथा ते राजानो मन्त्रिभिः सह नश्यन्ति ॥ १२ ॥

युक्तधर्ममनुष्ठिताः युक्तधर्मानुष्ठातारः साधवो नीतिमार्गनिष्ठाः सपरिच्छदाः सपरिजनाः ॥ १३ ॥

तीक्ष्णदण्डेन प्रजानां प्रतिकूलेन रक्ष्यमाणाः प्रजा न वर्धन्ते गोमायुना मृगघातकजीवेन रक्ष्यमाणा मृगा इव ॥ १४ ॥

कर्कशः क्रूरबुद्धिः कठिनश्च ॥ १५ ॥

अत्र त्वं * शोचनीयोऽसि ससैन्यो विनशिष्यसि ॥ १६ ॥
मां निहत्य तु रामोऽसावचिरात् त्वां वधिष्यति ।
अनेन कृतकृत्योऽस्मि म्रिये † चाप्यरिणा हतः ॥ १७ ॥
दर्शनादेव रामस्य हतं मामवधारय ।
आत्मानञ्च हतं विद्धि हृत्वा सीतां सबान्धवम् ॥ १८ ॥

तदिदं त्वत्तो मरणरूपं घोरं काकतालीयमाकस्मिकं मयासादितं यद्यपि तथापि तत्प्रति न मया शोकः क्रियते जातस्य हि ध्रुवो मृत्युरिति न्यायात् । तथापि त्वं ससैन्यो विनशिष्यसि यदत्राद्य त्वं मया शोचनीयोऽसि ॥ १६ ॥

ननु मम मरणं कथं निश्चितं तत्राह,—मामिति । मां निहत्य रामस्त्वां सबान्धवमचिराद्वधिष्यति तस्मादुभयथापि मरणं निश्चितं त्वत्तो वा रामाद्वा तत्रानेन वधेन कृतकृत्योऽस्मि तत् मृधे रणेऽरिणा हतो म्रिये राजतो बलान्मरणापेक्षया रणे प्रवृत्तो मृत्योः स्वर्गदत्वादाद्यमृत्योरपमृत्युत्वेन दुर्मरणत्वेन शास्त्रे उक्तः राज्ञा मारितस्य शौचोदकदानाद्यभावश्रवणाद्रामतो मरणेन कृतकृत्योऽहमिति व्यङ्ग्यम् । ईदृशं ज्ञानञ्चास्य तपसा योगेन च शुद्धचित्तत्वादिति बोध्यम् ॥ १७ ॥

आत्मानं रावणं सबान्धवमात्मानमित्यन्वयः ॥ १८ ॥

---

* किम् इति वा पाठः ।
† मृधे यत् इति वा पाठः ।

आनयिष्यसि चेत् सीतामाश्रमात् सहितो मया।
नैव त्वमपि नाहं वै नैव लङ्का न राक्षसाः ॥ १९ ॥
निवार्य्यमाणस्तु मया हितैषिणा
न मृष्यसे वाक्यमिदं निशाचर ! ।
परेतकल्पा हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावण-मारीचसंवादो नाम एकचत्वारिंशः सर्गः ॥ ४१ ॥

कदाचिद् यद्धि मया जीवता सहैव सीतामानयिष्यसि तदा पश्चादपि सर्वनाशो निश्चित इत्यर्थः ॥ १९ ॥

न मृष्यसे प्रतिकूलबुद्ध्या न परिगृह्णासीत्यर्थः । परेतकल्पाः मृतप्रायाः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ।

एवमुक्त्वा तु परुषं मारीचो रावणं ततः ।
गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिञ्चरप्रभो ! ॥ १ ॥
दृष्टश्चाहं पुनस्तेन शरचापासिधारिणा ।
मद्वधोद्यतशस्त्रेण निहतं जीवितञ्च मे ॥ २ ॥
न हि रामं पराक्रम्य जीवन् प्रतिनिवर्त्तते ।
वर्त्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥ ३ ॥
किन्तु कर्तुं मयाशक्यमेवं त्वयि दुरात्मनि ।
एष गच्छाम्यहं तात ! स्वस्ति तेऽस्तु निशाचर ! ॥ ४ ॥
प्रहृष्टस्त्वभवत् तेन वचनेन स राक्षसः ।

भयात् रावणादधुनैव हानिर्भविष्यतीति त्रासाद्गच्छावेत्यब्रवीत् ॥ १ ॥

तथावदन्नेव निजदुःखमप्याह,—दृष्टश्चाहमिति । पुनः यदाद्य तेन दृष्टो भविष्यामि तदोच्यमानविशेषणेन रामेण जीवितं निहतं नष्टमेव चकारात्तव च जीवितं नष्टम् ॥ २ ॥

यमदण्डहतस्य तेऽसौ रामः प्रतिरूपो यमदण्डप्रतिरूपो वर्त्तते ॥ ३ ॥

अयाशक्यपरिहारमनर्थं शोचति किं त्विति ॥ ४ ॥

परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ५ ॥
एतच्छौण्डीर्य्ययुक्तं ते मच्छन्दवशवर्तिनः।
इदानीमसि मारीचः पूर्वमन्यो हि राक्षसः ॥ ६ ॥
आरुह्यतामयं शीघ्रं खगो रत्नविभूषितः।
मया सह रथो युक्तः पिशाचवदनैः खरैः ॥ ७ ॥
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि।
तां शून्ये प्रसभं सीतामानयिष्यामि मैथिलीम् ॥ ८ ॥
ततस्तथेत्युवाचैनं रावणं ताटकासुतः।
ततो रावणमारीचौ विमानमिव तं रथम् ॥ ९ ॥
आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात्।
तथैव तत्र पश्यन्तौ पत्तनानि वनानि च ॥ १० ॥
गिरींश्च सरितः सर्वा राष्ट्राणि नगराणि च।
समेत्य दण्डकारण्यं राघवस्याश्रमं ततः ॥ ११ ॥

तेन वचनेन गच्छामीति वचनेन सुसंश्लिष्टं गाढ़म् ॥ ५ ॥

मच्छन्दवशवर्तिनः मदभिप्रायवशवर्तिनः शौण्डीर्य्यं वीर्य्यं तद्युक्तं एतद्वचो योग्यमिति शेषः। इदानीं मारीचोऽसि स्वप्रकृतिं प्राप्तोऽसि पूर्वमन्यो हि राक्षसस्तदाविष्ट इति शेषः ॥ ६ ॥

खगः आकाशगामी रथः ॥ ७ ॥

शून्ये रामलक्ष्मणरहिते समये ॥ ८ ॥ ९ ॥

आश्रममण्डलात् मारीचाश्रममण्डलादित्यर्थः। पत्तनमगरयो राज-

इदर्थं सहमारीचो रावणो राक्षसाधिपः ।
अवतीर्य्य रथात्तस्मात्ततः काञ्चनभूषणात् ॥ १२ ॥
हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ।
एतद्रामाश्रमपदं दृश्यते कदलीवृतम् ॥ १३ ॥
क्रियतां तत् सखे ! शीघ्रं यदर्थं वयमागताः ।
स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा ॥ १४ ॥
मृगो भूत्वाश्रमद्वारि रामस्य विचचार ह ।
स तु रूपं समास्थाय महदद्भुतदर्शनम् ॥ १५ ॥
मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः ।
रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः ॥ १६ ॥
किञ्चिदभ्युन्नतग्रीव इन्द्रनीलनिभोदरः ।

धानी राजधानीत्वेन भेदः । पत्तनशब्दोऽर्धर्चादिः ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥

मणिप्रवरशृङ्गाग्रः इन्द्रनीलरत्नाकारशृङ्गाग्रः । मणिशब्दः केवल इन्द्रनीले इति कविसमय इति कतकः । क्वचित् सिता क्वचिदसिता मुखस्याकृतिः शोभा यस्य सः । तदेवाह,—रक्तपद्मोत्पलेति । उत्पलं नीलोत्पलम् । इन्द्रनीलवदुत्पलवच्च्छवः श्रवणौ यस्य सः ॥ १६ ॥

मधूकपुष्पसदृशपार्श्वद्वयः कञ्जं पद्मं तत्किञ्जल्कसदृशवर्णः ॥ ॥ १७ ॥

मधूकनिभपार्श्वश्च कञ्जकिञ्जल्कसन्निभः ॥ १७ ॥
वैदूर्य्यसङ्काशखुरस्तनुजङ्घः सुसंहतः।
इन्द्रायुधसवर्णेन पुच्छेनोर्द्ध्वं विराजितः ॥ १८ ॥
मनोहरस्निग्धवर्णो रत्नैर्नानाविधैर्वृतः।
क्षणेन राक्षसो जातो मृगः परमशोभनः ॥ १९ ॥
वनं प्रज्वलयन् रम्यं रामाश्रमपदञ्च तत्।
मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ॥ २० ॥
प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम्।
विचरन् गच्छते शष्पं शाद्वलानि समन्ततः ॥ २१ ॥
रौप्यैर्बिन्दुशतैश्चित्रो भूत्वा च प्रियदर्शनः।
विटपीनां किसलयान् भक्षयन् विचचार ह ॥ २२ ॥
कदलीगृहकं गत्वा कर्णिकारानितस्ततः।
तमाश्रमं मन्दगतिं सीतासन्दर्शनं ततः ॥ २३ ॥

सुसंहतः श्लिष्टसन्धिबन्धः ॥ १८ ॥ १९ ॥

प्रज्वलयन् प्रदीपयन् ॥ २० ॥

शाद्वलानि विचरन् भक्षयन् गच्छते गच्छति ॥ २१ ॥

चिचर्मिति क्रियाविशेषणम्। विटपीनामिति दीर्घ आर्षः छन्दोऽनुरोधात् भक्षादन्निति पाठे आर्ष अनुनासिकलोपः ॥ २२ ॥

राजीवचित्रपृष्ठः स विरराज महामृगः ।
रामाश्रमपदाभ्याशे विचचार यथासुखम् ॥ २४ ॥
पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः ।
गत्वा मुहूर्त्तं त्वरया पुनः प्रतिनिवर्त्तते ॥ २५ ॥
विक्रीडंश्च पुनर्भूमौ पुनरेव निषीदति ।
आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६ ॥
मृगयूथैरनुगतः पुनरेव निवर्त्तते ।
सीतादर्शनमाकाङ्क्षन् राक्षसो मृगतां गतः ॥ २७ ॥
परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् ।
समुद्वीक्ष्य च सर्वे तं मृगा येऽन्ये वनेचराः ॥ २८ ॥
उपगम्य समाघ्राय विद्रवन्ति दिशो दश ।
राक्षसः सोऽपि तान् वन्यान् मृगान् मृगवधे रतः ॥ २९ ॥
प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् ।

कदलीगृहं कदलीवाटिकां कर्णिकारान् तद्वनञ्च गत्वा त्यक्ता सीतासन्दर्शनमपेक्ष्येतस्ततो मन्दगतिं समाश्रयन् विचचार विरराज च ॥ ॥ २३ ॥ २४ ॥ २५ ॥

मृगयूथानि गच्छति तत्पृष्ठतो गच्छतीत्यर्थः ॥ २६ ॥ २७ ॥

विनिष्पतन् । प्रागल्भ्येन कुर्वन्नित्यर्थः ॥ २८ ॥

विद्रवन्ति अस्मात्तन्निश्चयादिति शेषः ॥ २९ ॥

तस्मिन्नेव ततः काले वैदेही शुभलोचना ॥ ३० ॥
कुसुमापचये व्यग्रा पादपानत्यवर्त्तत ।
कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ॥ ३१ ॥
कुसुमान्यपचिन्वन्ती चचार रुचिरानना ।
अनर्हा वनवासस्य सा तं रत्नमयं मृगम् ॥ ३२ ॥
मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ।
तं वै रुचिरदन्तोष्ठं रूप्यधातुतनूरुहम् ॥ ३३ ॥
विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत ।
स च तां रामदयितां पश्यन् मायामयो मृगः ॥ ३४ ॥

मृगवधे रतोऽपि भावस्य राक्षसस्य संच्छादनार्थं संस्पृशन्नपि मृगान्न भक्षयति ॥ ३० ॥

अपचयो ग्रहणम् । अत्राशोकचूतकुसुमानामपचयोक्त्या शिशिरान्तकालोऽयम् । गन्धवान् सुरभिर्मासो जातपुष्पफलद्रुम इति सन्तापयति सौमित्रे क्रूरश्चैत्रवनानिल इति च पम्पातीरे रामोक्तेश्च किञ्चाग्रे द्वादशमासोत्तरं यद्येषा मां नाङ्गीकरोति तदैनां हन्मीति रावणप्रतिज्ञा । ततो हनुमद्दर्शनकाले च तं प्रति सीतावाक्यं वर्त्तते दशममासो द्वौ तु शेषौ प्लवङ्गमेति सङ्गच्छते । माघे शुक्लाष्टम्यां हरणे हि मार्गशुक्लाष्टम्यां ततोऽर्वागेव वा दशमसमाप्त्या तस्य वर्त्तमानत्वोक्तिरसङ्गतैव स्यात् । तच्छुक्लपक्षान्ते हनूमतस्तद्दर्शनात् ॥ ३१ ॥

अनर्हा वनवासस्यानेन नगरवासः सूचितः ॥ ३२ ॥

विचचार ततस्तत्र दीपयन्निव तद्वनम् ।
अदृष्टपूर्वं दृष्ट्वा तं नानारत्नमयं मृगम् ।
विस्मयं परमं सीता जगाम जनकात्मजा ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे हिरण्य-
मृगदर्शनं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रूप्यं रजतं धातवो गैरिकाद्यास्तत्सदृशरोमयुक्तम् ॥३३॥३४॥३५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

## त्रिचत्वारिंशः सर्गः ।

---

सा तं संप्रेच्य सुश्रोणी कुसुमानि विचिन्वती ।
हेमराजतवर्णाभ्यां पार्श्वाभ्यामुपशोभितम् ॥ १ ॥
प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी ।
भर्त्तारमपि चक्रन्द लक्ष्मणञ्चैव सायुधम् ॥ २ ॥
आहूयाहूय च पुनस्तं मृगं साधु वीक्षते ।
आगच्छागच्छ शीघ्रं वै आर्य्यपुत्र ! सहानुज ॥ ३ ॥
तावाहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ।
वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ४ ॥
शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो वाक्यमब्रवीत् ।
तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ५ ॥
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने ।

सालमिति ॥ १ ॥

मृष्टहाटकं शुद्धं हेम तत्सदृशवर्णा चक्रन्द आह्वाने क्रन्दिः चक्रन्देति रोदनार्थेन भाव्यमशुभमिति सूचितं कविना ॥ २ ॥ ३ ॥

तावाहूतौ वीक्षयेति शेषः ॥ ४ ॥ ५ ॥

अनेन निहता राम ! राजानः पापरूपिणा ॥ ६ ॥
अस्य मायाविदो माया मृगरूपमिदं कृतम् ।
भानुमत् पुरुषव्याघ्र ! गन्धर्वपुरसन्निभम् ॥ ७ ॥
मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव ! ।
जगत्यां जगतीनाथ ! मायैषा हि न संशयः ॥ ८ ॥
एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य्य शुचिस्मिता ।
उवाच सीता संहृष्टा छद्मना हृतचेतना ॥ ९ ॥
आर्य्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो ! क्रीड़ार्थं नो भविष्यति ॥ १० ॥
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ।
मृगाश्चरन्ति सहितास्मराः सृमरास्तथा ॥ ११ ॥
ऋक्षाः पृषतसंघाश्च वानराः किन्नरास्तथा ।

मृगयां चरन्तस्तां कुर्वन्तः उपाधिना मृगरूपच्छलेन ॥ ६ ॥

अस्य मायाविदो माया या श्रुता सा मृगरूपमिदं कृतम् । मायैव मृगरूपेण परिणतेत्यर्थः । भानुमत्प्रकाशयुतम् । गन्धर्वपुरवदापातरमणीयम् ॥ ७ ॥

नास्ति एवमुपादानकमृगासंभवात् ॥ ८ ॥

काकुत्स्थं लक्ष्मणं प्रतिवार्य्य नायं राक्षसोऽपि तु चित्रमृगो नैतद्ग्रहणविघ्नस्त्वया कार्य्य इत्युक्त्वेत्यर्थः । छद्मना वञ्चनेन हृतचेतना सेव ॥९॥

नोऽस्माकम् अयोध्यागमनोत्तरं तत्र सख्यभिप्रायेण बहुवचनम् ॥१०॥

विहरन्ति महाबाहो ! रूपश्रेष्ठा महाबलाः ॥ १२ ॥
न चान्यः सदृशो राजन् ! दृष्टः पूर्वं मृगो मया।
तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ १३ ॥
नानावर्णविचित्राङ्गो रत्नभूतो ममाग्रतः।
द्योतयन् वनमव्यग्रं द्योतते शशिसन्निभः ॥ १४ ॥
अहो रूपमहो लक्ष्मीः स्वरसंपच्च शोभना।
मृगोऽद्भुतो विचित्राङ्गो हृदयं हरतीव मे ॥ १५ ॥
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ १६ ॥
समाप्तवनवासानां राज्यस्थानञ्च नः पुनः।
अन्तःपुरे विभूषार्थो मृग एष भविष्यति ॥ १७ ॥
भरतस्यार्य्यपुत्रस्य श्वश्रूणां मम च प्रभो ! ।

सृमरचमरौ कृष्णशुक्लपुच्छौ ॥ ११ ॥ १२ ॥

अन्यः सदृशः एतत्सदृशोऽन्य इत्यर्थः। तेजसा विचित्रगतिसामर्थ्येन। क्षमया सौम्यभावेन दीप्त्या देहकान्त्या ॥ १३ ॥

शशिसन्निभत्वेनाह्लादकत्वम् ॥ १४ ॥

स्वरसम्पत् ध्वनिसमृद्धिः ॥ १५ ॥

तव ग्रहणं त्वत्कर्तृकग्रहणम्। जीवतो ग्रहणमाश्चर्यभूतं भवति। यतोऽतो विस्मयं जनयिष्यति ॥ १६ ॥ १७ ॥ १८ ॥

मृगरूपमिदं दिव्यं * विस्मयं जनयिष्यति ॥ १८ ॥
जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं नरशार्दूल! रुचिरं तु भविष्यति ॥ १९ ॥
निहतस्यास्य सत्वस्य जाम्बूनदमयत्वचि ।
शष्पवृस्यां विनीतायां इच्छाम्यहमुपासितुम् ॥ २० ॥
कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् ।
वपुषा त्वस्य सत्वस्य विस्मयो जनितो मम ॥ २१ ॥
तेन काञ्चनरोमन्या तु मणिप्रवरशृङ्गिणा ।
तरुणादित्यवर्णेन नक्षत्रपथवर्चसा ॥ २२ ॥

हतोऽपि यदि ते ग्रहणं प्राप्नोति तदापि मे प्रयोजनमित्याह, अजिनमिति ॥ १९ ॥

शष्पवृस्यां बालतृणपरिकल्पिततापसासने विनीतायां प्रसारितायामस्य जाम्बूनदमयत्वचि उपासितुं तत्समीपे स्थातुम् इच्छामि। यद्वा भगवदुपासनां कर्तुमित्यर्थः ॥ २० ॥

इदं कामेन स्वप्रयोजनेच्छया पतिनियोजनरूपं रौद्रम् अतएव स्त्रीणामसदृशं कैकेयीवदिति मम निर्णीतं तथापि अस्य सत्वस्य वपुषा मम विस्मयो जनित इति जातकौतुकनिवृत्यर्थमनुचितमपि करोमीति शेषः ॥ २१ ॥

* व्यक्तम् इति वा पाठः ।

बभूव राघवस्यापि मनोविस्मयमागतम् ।
इति सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतम् ॥ २३ ॥
लोभितस्तेन रूपेण सीतया च प्रचोदितः ।
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २४ ॥
पश्य लक्ष्मण ! वैदेह्याः स्पृहामुल्लसिता*मिमाम् ।
रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २५ ॥
न वने नन्दनोद्देशे न चैत्ररथसंश्रये ।
कुतः पृथिव्यां सौमित्रे ! योऽस्य कश्चित् समो मृगः ॥ २६ ॥

काञ्चनरूपेणेति पाठे रूपेण मृगेण । रूपं मृगेऽपि विशेषयमिति वृषायुधः । नक्षत्रसदृशनानाबिन्दूपलक्षितत्वात् तत्पथसदृशेन ॥ २२ ॥

राघवस्यापि सम्भाविताऽसम्भावितवस्तुतत्त्वनिरूपणकुशलमतेरपि मनोविस्मयमागतं प्राप्तं तदिव बभूव भवितव्यतायाः प्राबल्यात् ॥ २३ ॥

तदेवाह, लोभित इति ॥ २४ ॥

रूपेण अलौकिकविचित्ररूपेण श्रेष्ठः सर्वश्रेष्ठरूपेण हेतुना अद्य एष मृगो न भविष्यति न जीविष्यति । जीवनमस्य न सम्भावितमित्यर्थः प्रायेण मृगत्वमत्र न संभावितमित्यर्थ इति कतकः ॥ २५ ॥

नन्दन इत्युद्देशः कीर्त्तनं यस्य । तत्र वने चैत्ररथसंश्रये तदाख्ये वनेऽपि न योऽस्य कश्चित् समो मृगः स पृथिव्यामस्ति इति कुतः संभाव्यते इत्यर्थः ॥ २६ ॥

---

* स्पृहां मृगगताम् इति वा पाठः ।

प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः।
शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः॥ २७॥
पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम्।
जिह्वां मुखान्निःसरन्तीं मेघादिव शतह्रदाम्॥ २८॥
मसारगल्लर्कमुखः शंखमुक्तानिभोदरः।
कस्य नामानिरूप्योऽसौ न मनोलोभयेन्मृगः॥ २९॥
कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयप्रभम्।
नानारत्नमयं दिव्यं न मनोविस्मयं व्रजेत्॥ ३०॥
मांसहेतोरपि मृगान् विहारार्थञ्च धन्विनः।
घ्नन्ति लक्ष्मण! राजानो मृगयायां महावने॥ ३१॥
धनानि व्यवसायेन विचीयन्ते महावने।

तदेवाह,—प्रतिलोमेत्यादि। कनकबिन्दुभिः सहिता रोमराजय इत्यन्वयः॥ २७॥

शतह्रदा विद्युत्॥ २८॥

मसारगल्लर्कमुखः शङ्खमुक्तानिभोदर इति पाठे मसार इन्द्रनीलस्य गल्लर्कं चषकं तदाकारास्यसंपुट इत्यर्थ इति तीर्थः। अनिरूप्य इदमित्थमिति निरूपयितुमशक्यः। पाठान्तरे यस्येत्यादि॥२९॥३०॥

मांसहेतोरपि विहारार्थञ्च घ्नन्ति किं पुनरेवंविधरत्नलाभार्थमिति भावः॥ ३१॥

महावने राजभिरिति शेषः। व्यवसायेन मृगवधोद्यमेन धनानि

धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३२ ॥
तत्सारमखिलं नृणां धनं निचयवर्धनम् ।
मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ! ॥ ३३ ॥
अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् ।
तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्यास्तु लक्ष्मण ! ॥ ३४ ॥
एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि ।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३५ ॥

चीयन्ते संगृह्यन्ते । ननु वने कुतो धनं तत्राह,—धातव इति । मणि-रत्नं सुवर्णञ्च येषु तादृशा धातवः वज्रादिमणिसुवर्णादियुक्ताश्माद्रि-धातव इति यावत् । [ धनानि विचित्रमृगादिरूप धनानि मणि-रत्नं सुवर्णञ्च तद्युक्ता धातवस्तामादयश्च व्यवसायेन उद्योगेन महावने विचीयन्ते राजभिरिति शेषः । वनं इत्युपलक्षणं यत्र क्वापि स्थितं वस्तु संगृह्यत इति भावः । ] ॥ ३२ ॥

निचयवर्धनं कोषवर्धनं तदन्यं धनं नृणां सारमतिप्रशस्तं भवति । शुक्रं ब्रह्म स पर्य्यगाच्छुक्रमकायमव्रणमिति श्रुतेः । यथा शुक्रस्य ब्रह्म-लोकं प्राप्तस्य तद्रूपमापन्नस्य मनसा चिन्तितं सर्वं संकल्पमात्रसिद्धं सर्वं भोग्यवस्तु यथा सर्वस्मात् सारतरं तद्वत् ॥ ३३ ॥

ननु तथापि विचार्य्यं कर्त्तव्यं तत्राह,—अर्थीति । अर्थी अर्थापेक्षः पुमान् येनार्थकृत्येन अर्थनिमित्तेन कर्त्तव्येन कर्मणा तत्सौन्दर्य्याद्दाक्षिप्त-हृदयोऽविचारयन्नेव व्रजति तत्सम्पादनार्थं तमेवार्थ्याः अर्थसम्पादन-चतुराः अर्थशास्त्रज्ञा अर्थम् अर्थयदवाप्यमाहुः ॥ ३४ ॥

न कादली न प्रियकी न प्रवेणी न चाविकी ।
भवेदेतस्य सदृशी स्पर्शनेनेति मे मतिः ॥ ३६ ॥
एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः ।
उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३७ ॥
यदि वायं तथा यन्मां भवेद्वदसि लक्ष्मण ! ।
मायैषा राक्षसस्येति कर्त्तव्योऽस्य वधो मया ॥ ३८ ॥
एतेन हि नृशंसेन मारीचेनाकृतात्मना ।
वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः ॥ ३९ ॥
उत्थाय बहवो येन मृगयायां जनाधिपाः ।

अतोऽविचारितैवात्र प्रवृत्तिरित्याह,—एतस्येति । अत्र विचारो न कर्तव्य एतन्मूलेन महतोऽर्थस्य सिद्धिरिति गूढतात्पर्य्यम् ॥ ३५ ॥

अस्य परार्ध्यत्वमेव दर्शयति,—नेति । कदल्या इयं त्वक् कादली मृदुचक्कबुर्नीलाग्ररोमा मृगविशेषः कदली । प्रियकी मृदुचमदीर्घघन-रोमयुक्तो मृगः प्रियकस्तस्येयं प्रियकी । प्रवेणी अजविशेषसम्बन्धिनी । आविकी अवि त्वक् । प्रत्येकं नञुक्तिः सर्वथा सादृश्याभावबोधनाय अनेन एतदीयत्वचा ॥ ३६ ॥

यश्च नभश्चरो मृगः मृगशिरो नक्षत्ररूपः तदेवाह,—तारामृगेति ॥ ३७ ॥

अथ लक्ष्मणमतमङ्गीकृत्यापि प्रवृत्तिमित्याह,—यदि वेति । राक्षस-मायैषा न मृग इति यथा मां वदसि । यदि वा तथैवेव भवेत्तथाप्यस्य वधो मया कर्त्तव्य एव राक्षसवधस्य प्रतिज्ञातत्वात् ॥ ३८ ॥ ३९ ॥

निहताः परमेष्वासास्तस्मादृष्ष्यस्य मृगः। ४०।
पुरस्तादिह वातापिः परिभूय तपस्विनः।
उदरस्थो द्विजान् हन्ति स्वगर्भोऽश्वतरीमिव॥ ४१।
स कदाचिच्चिराल्लोके * आससाद महामुनिम्।
अगस्त्यं तेजसा युक्तं भक्ष्यस्तस्य बभूव ह। ४२।
समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तम्।
उत्स्मयित्वा तु भगवान् वातापिमिदमब्रवीत्। ४३॥
त्वयाऽविगण्य वातापे! परिभूतास्च तेजसा।
जीवलोके द्विजश्रेष्ठास्तस्मादसि जरां गतः। ४४॥

उत्थाय प्रादुर्भूय उत्प्लुत्य वा॥ ४०॥

पुरस्तात् पूर्वम् इह दण्डकारण्ये स्वगर्भाऽश्वतरीमिवेति। अश्वतरी स्वगर्भेण म्रियत इति प्रसिद्धिः। अश्वतरी गर्दभादश्वायामुत्पन्नेति तीर्थः। अश्वतरी कर्कटीति परे। वृश्चिक इति कतकः। अस्याश्च-व्याख्यैव ज्यायसी तस्या गर्भस्योदरपाटनं विना न निःसरणमिति सर्व-जनप्रसिद्धेः॥ ४१॥ ४२॥

समुत्थाने आह्वान्ते तद्रूपं राक्षसं रूपम् उत्स्मयित्वा ईषद्धसित्वा॥ ॥ ४३॥

अविगण्य अविचार्य पापं तस्माद्द्विजपरिभवजपापेन जरां जीर्णताम्॥ ४४॥

* लोभात् इति वा पाठः।

एवन्तु न भवेद्भ्रातो वातापिरिव लक्ष्मण ! ।
मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ॥ ४५ ॥
भवेद्धतोऽयं वातापिरगस्त्येनेव मा गतः ।
इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम् ॥ ४६ ॥
अस्यामायत्तमस्माकं यत् कृत्यं रघुनन्दन ! ।
अहमेनं वधिष्यामि ग्रहीष्याम्यथवा मृगम् ॥ ४७ ॥
यावद्गच्छामि सौमित्रे ! मृगमानयितुं द्रुतम् ।
पश्य लक्ष्मण ! वैदेह्या मृगत्वचि गतां स्पृहाम् ॥ ४८ ॥
त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति ।

यो मारीचो मद्विधमतिमन्येतातिक्रामेत् तद्भक्तोऽपि मारीचाख्यं वातापिरिव न भवेदेव न जीवेदेव ॥ ४५ ॥

उक्तमेवार्थं पुनराह;—दार्ढ्याय भवेदिति । मा मां गतः प्राप्तो मारीचोऽगस्त्येन वातापिरिव मया हतो भवेत् भविष्यतीत्यर्थः । सन्नद्धः धनुःकवचादियुक्तः । यन्त्रितः यत्नवान् व्यापारान्तरहीनः ॥ ४६ ॥

अस्माकं यत्कृत्यमावश्यकं कर्त्तव्यं तदस्यामेतद्रक्षाविषये आयत्तं स्थितं तन्मुख्यकृत्ये त्वं सावधानस्तिष्ठ स्वकर्त्तव्यमाह,—अहमिति । अत्र पूर्वश्लोकचतुर्थचरणस्यैवेयं अयन्त्रितो यन्त्रणया हीनोऽतियत्नरहितः सीतां रक्ष । यदस्माकं कृत्यमवतारग्रहणप्रयोजनं तदस्यामायत्तम् अनयैव साधनीयमित्यपि सूचितम् ॥ ४७ ॥

यावद्गच्छामि गमिष्यामीत्यर्थः । आनयितुं आनेतुं तत्र हेतुः पश्येति ॥ ४८ ॥

अप्रमत्तेन ते भाव्यम् आश्रमस्थेन सीतया ॥ ४९ ॥

यावत् पृषतमेकेन सायकेन निहन्म्यहम् ।

हत्वैतच्चर्म आदाय शीघ्रमेष्यामि लक्ष्मण ! ॥ ५० ॥

प्रदक्षिणेनातिबलेन पक्षिणा

जटायुषा बुद्धिमता च लक्ष्मण ! ।

भवाप्रमत्तः प्रतिगृह्य मैथिलीम्

प्रतिक्षणं सर्वत एव शङ्कितः ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे राम-
लक्ष्मणसंवादो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

प्रधानया सर्वोत्तमया न भविष्यति न जीविष्यति । अनेन जीवतो ग्रहणमसुशक्यमिति दर्शितम् । ते त्वया सीतया सहेति शेषः । अनया प्रेरिते कर्त्तव्ये चेत्यप्यर्थः ॥ ४९ ॥

यावदिति । तावदप्रमत्तेन भाव्यमित्यन्वयः ॥ ५० ॥

प्रदक्षिणेन समर्थेन । सर्वतः सर्वदिगवस्थितरक्षोसुरेभ्यः ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## पञ्चचत्वारिंशः सर्गः ।

---

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ।
दधारासिं * महातेजा जाम्बूनदमयत्सरुम् ॥ १ ॥
ततस्त्रिविनतं चापमादायात्मविभूषणम् ।
आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २ ॥
तं वन्यराजो राजेन्द्रमापतन्तं † निरीक्ष्य वै ।
बभूवान्तर्हितस्त्रासात् पुनः सन्दर्शनेऽभवत् ॥ ३ ॥
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ।
तं स्म पश्यति रूपेण द्योतयन्तमिवाग्रतः ॥ ४ ॥

त्सरुः खड्गमुष्टिः ॥ १ ॥

मध्ये स्थलत्रयं विनतं त्रिविनतम् । आत्मविभूषणं चापस्य वीरालङ्कारत्वात् । आत्मविभूषणमित्यनेनागस्त्यदत्तं वैष्णवमिति सूचितम् । कलापौ तूणीरे ॥ २ ॥

वन्यराजः वन्यानां मृगाणां राजा विचित्रमृगत्वात् पुनः सन्दर्शने दृष्टिविषये ॥ ३ ॥

---

* ववन्धासिं इति वा पाठः ।

† आव्रजन्तं इति वा पाठः ।

अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिर्महावने ।
अतिवृत्तमिवोत्पाताल्लोभयानं कदाचन ॥ ५ ॥
शङ्कितं तु समुद्भ्रान्तमुत्पतन्तमिवाम्बरम् ।
दृश्यमानमदृश्यञ्च वनोद्देशेषु केषुचित् ॥ ६ ॥
छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् ।
मुहूर्त्तादेव ददृशे मुहुर्दूरात्प्रकाशते ॥ ७ ॥
दर्शनादर्शनेनैव सोऽपाकर्षत राघवम् ।
स दूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥ ८ ॥
आसीत् क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः ।

रूपेण स्वरूपेणायतो द्योतयन्तं द्योतमानमिव स्थितम् ॥ ४ ॥

अतिवृत्तम् अतिक्रान्तं कदाचन लोभयानं हस्तप्राप्तमिव दृश्यमानम् ॥ ५ ॥

शङ्कितमिषुपातादिति शेषः। वनोद्देशेषु कश्चिद्दृश्यमानम् ॥ ६ ॥

छिन्नाभ्रसंवीतचन्द्रसादृश्येनाप्यपादकमुत्तरार्धम् ॥ ७ ॥

दर्शनादर्शनेति द्वन्द्वैकवद्भावः स मृगतां गतो मारीचोऽस्याश्रमस्य दूरं गत इत्यर्थः ॥ ८ ॥

तेन दर्शनादर्शनेन विलोभ्य मोहयता मारीचेन मोहितो वञ्चितः विवशस्तत्त्वग्लोभपरवश इव सुतरां छायामाश्रित्यावतस्थे ॥ ९ ॥

---

* दृष्टोः इति वा पाठः ।

अथावतस्थे सुश्रान्तश्छायामाश्रित्य शाड्वले ॥ ९ ॥
स तमुन्मादयामास मृगरूपो निशाचरः ।
मृगैः परिवृतोऽथान्यैरदूरात् प्रत्यदृश्यत ॥ १० ॥
गृहीतुकामं दृष्ट्वा तं पुनरेवाभ्यधावत ।
तत्क्षणादेव संत्रासात् पुनरन्तर्हितोऽभवत् ॥ ११ ॥
पुनरेव ततो दूराद् वृक्षखण्डाद्विनिःसृतः ।
दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ॥ १२ ॥
भूयस्तु शरमुद्धृत्य * कुपितस्तत्र राघवः ।
सूर्यरश्मिप्रतीकाशं ज्वलन्तमरिमर्दनम् ॥ १३ ॥
सन्धाय स दृढ़ं चापे विकृष्य बलवद् बली ।
तमेव मृगमुद्दिश्य ज्वलन्तमिव पन्नगम् ॥ १४ ॥
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ।
स भृशं मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ १५ ॥

उन्मादयामास बहुदूरधावनेन चित्तविभ्रमं चकार ॥१०॥११॥१२॥
भूयः कुपित इति शेषः ॥ १३ ॥ १४ ॥
ब्रह्मविनिर्मितमस्त्रं ब्रह्मास्त्रम् । ब्रह्मदत्तमायाच्च मायारूपसदृशरूपस्य मायाकृतरूपे यक्षवत् प्रविश्य स्थितस्य ॥ १५ ॥

---

* उत्कृष्य इति वा पाठः ।

मारीचस्यैव हृदयं बिभेदाशनिसन्निभः।
तालमात्रमथोत्प्लुत्य न्यपतत् स भयातुरः॥ १६॥
व्यनदद् भैरवं नादं धरण्यामल्पजीवितः।
म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम्॥ १७॥
स्मृत्वा तद्वचनं रक्षो दध्यौ केन तु लक्ष्मणम्।
इह प्रस्थापयेत् सीता तां शून्ये रावणो हरेत्॥ १८॥
स प्राप्तकाल*माज्ञाय चकार च ततः स्वनम्।
सदृशं राघवस्यैव हा सीते लक्ष्मणेति च॥ १९॥
तेन मर्मणि निर्विद्धः शरेणानुपमेन हि।
मृगरूपं तु तत् त्यक्त्वा राक्षसं रूपमास्थितः॥ २०॥

मारीचस्यैव हृदयं न तु तत्कृतमायामृगाकारमात्रस्य तालमात्र-मुत्प्लुत्य शरवेगकृतवेधादिति शेषः॥ १६॥ १७॥

तद्वचनं रावणवचनं दध्यौ ध्यानं कृतवान् केन मत्कृतेनोपायेन सीता लक्ष्मणं प्रस्थापयेत् ताञ्च शून्ये रावणो हरेदिति दध्यौ॥ १८॥

प्राप्तकालमाज्ञाय रावणोक्तमुपायमेव युक्तं मत्वा॥ १९॥

मर्मणि प्राणस्थाने रक्षस इदं राक्षसं रूपमास्थितः पूर्वोक्तं शब्दं चक्रे इत्यन्वयः॥ २०॥

---

* तद्वचनं इति वा पाठः

चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् * ।
तं दृष्ट्वा पतितं भूमौ राक्षसं भीमदर्शनम् ॥ २१ ॥
रामो रुधिरसिक्ताङ्गं चेष्टमानं महीतले ।
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २२ ॥
मारीचस्य तु मायैषा पूर्वोक्ता लक्ष्मणेन तु ।
तत्तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २३ ॥
हा सीते ! लक्ष्मणेत्येवमाक्रुश्य तु महास्वनम् ।
ममार राक्षसः सोऽयं श्रुत्वा सीता कथं भवेत् ॥ २४ ॥
लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति ।
इति सञ्चिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २५ ॥

सुमहाकायः महाशरीरम् ॥ २१ ॥ ॥ २२ ॥

लक्ष्मणवच स्वाह, मारीचस्य त्विति ॥ २३ ॥

सीता कथं भवेत् । किम् अधैर्य्यं नाटयित्वा लक्ष्मणं प्रेषयेत् उत धीरा भवेदित्यर्थः ॥ २४ ॥

कामवस्थाम् अधैर्य्यादिति शेषः । हृष्टतनूरुहस्त्रासादिव रोमाञ्चिततनुः ॥ वस्तुत एतन्मूलेन सर्वकार्य्यनिष्पत्तिरिति हर्षाद्रोमाञ्चिततनुः ॥ २५ ॥

---

* ततो विचित्रकेयूरः सर्वाभरणभूषितः ।
हेममाली महादंष्ट्रो राक्षसोऽभूत् शराहतः ॥
इत्यतिरिक्तं पाठान्तरम्।

तत्र रामं भयं तीव्रमाविवेश विषादजम्।
राघवं मृगरूपं तं हत्वा श्रुत्वा च तत् स्वनम् ॥ २६ ॥
निहत्य पृषतं चान्यं मांसमादाय राघवः।
त्वरमाणो जनस्थानं ससाराभिमुखं तदा ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे मारीचवधो नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

तत्र नटवद्भगवान् मनुष्यरूपत्वात् भयशोकादिमत्त्वं नाटयतीति। कविरपि सर्वलोकवेद्यं तथैवाह,—तत्र रामं भयमिति। वास्तविकमर्थं तु हृष्टतनूरुहः इति हृष्टपदेन प्रागेव भणितवान् ॥ २६ ॥

पृषतं मृगं जनस्थानमभिमुखं जनस्थानवर्त्तिनिजाश्रमाभिमुखम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## चतुश्चत्वारिंशः सर्गः ।

आर्त्तस्वरन्तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ आनीहि राघवम् ॥ १ ॥
न हि मे जीवितं स्थाने हृदयं वावतिष्ठते ।
क्रोशतः परमार्त्तस्य श्रुतः शब्दो मया भृशम् ॥ २ ॥
आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि ।
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥ ३ ॥
रक्षसां वशमापन्नं सिंहानामिव गोवृषम् ।
न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥ ४ ॥
तमुवाच ततस्तत्र क्षुभिता * जनकात्मजा ।

अथ सीता रामविषयशोकनाटनेन लक्ष्मणमुद्दासयति,—आर्त्तेति ।
भर्तुः स्वरेण सदृशं स्वरं भर्तुः स्वर इत्येव ज्ञात्वेत्यर्थः ॥ १ ॥

क्रोशतः रामस्य ॥ २ ॥ ३ ॥

आज्ञाय शासनम् अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतयेत्युक्तमनुचिन्त्येत्यर्थः ॥ ४ ॥

---

* चण्डा कुपिता इति क्व पाठः ।

सौमित्रे ! मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ॥ ५ ॥
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ।
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण ! मत्कृते ॥ ६ ॥
लोभात्तु मत्कृते नूनं नानुगच्छसि राघवम् ।
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ॥ ७ ॥
तेन तिष्ठसि विस्रब्धं तमपश्यन् महाद्युतिम् ।
किं हि संशयमापन्ने तस्मिन्निह मया भवेत् ॥ ८ ॥
कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः ।
एवं ब्रुवाणां वैदेहीं बाष्पशोकसमन्विताम् ॥ ९ ॥

क्षुभिता क्षुभितेव ग्रन्तुवच्छ्रुयोग्यवृत्तः ॥ ५ ॥

तदेवाह,—यस्त्वमिति । नाभिपद्यसे न प्राप्तो भवसि । मत्कृते मत्परिग्रहार्थम् ॥ ६ ॥ ७ ॥

विस्रब्धं विश्वस्तं यथा तथा । विस्रब्ध इति पाठान्तरम् । त्वद्रक्षणं विहाय कथं गच्छामीत्यत्राह,—किं हीति । यो रामः प्रधानं यस्य स यत्प्रधानस्त्वमिहागतस्तस्मिन् रामे संशयापन्ने सति मया तिष्ठन्त्या त्वद्रक्षणेन जीवन्त्या किं कर्त्तव्यं भवेत् । तदभावे मरणमेव श्रेयस्तच्चेन केनापि भवतु रक्षसा वाऽन्येन जन्तुना वा स्वतो वह्निप्रवेशादिना वेति भावः । अत्रायं ध्वनिः । राक्षससंहारप्रधानकार्य्यकरणायागतस्य तव त्वद्भ्रातुर्वा तस्मिन् कार्य्ये इह मदवस्थित्या संशयमापन्ने इह जीवन्त्या मया किं कार्य्यं भवेत् सर्वलोकोत्पत्तिस्थितिसंहारेषु तव भ्रातुरहमेव सहकारिणी प्रकृतस्य संहारेऽस्य मदवस्थित्या न निवर्त्तत इति ॥ ८ ॥ ९ ॥

अब्रवीत्रस्तचकिताः सीतां मृगवधूमिव।
पन्नगासुरगन्धर्वदेवदानवराक्षसैः ॥ १० ॥
अशक्यस्तव वैदेहि! भर्त्ता जेतुं न संशयः।
देवि! देवमनुष्येषु गन्धर्वेषु पतत्रिषु ॥ ११ ॥
राक्षसेषु पिशाचेषु किन्नरेषु मृगेषु च।
दानवेषु च घोरेषु न स विद्येत शोभने! ॥ १२ ॥
यो रामं प्रतियुध्येत समरे वासवोपमम्।
अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ॥ १३ ॥
न त्वामस्मिन् वने हातुमुत्सहे राघवं विना।
अनिवार्य्यं बलं तस्य बलैर्बलवतामपि ॥ १४ ॥
त्रिभिर्लोकैः समुदितैः सेश्वरैः सामरैरपि।
हृदयं निर्वृतं तेऽस्तु सन्तापस्त्यज्यतां तव ॥ १५ ॥
आगमिष्यति ते भर्त्ता शीघ्रं हत्वा मृगोत्तमम्।

एवं बोधिततत्त्वोऽपि मानुष्यनाटनेन लोकव्यवहारानुसाराल्ल-क्ष्मणोऽवददित्याह, अब्रवीदिति ॥ १० ॥ ११ ॥ १२ ॥

न स विद्येत नश्येदेवेत्यर्थः। न स विद्येतेत्युक्तं तत्र स कस्तत्राह, यो राममिति ॥ १३ ॥

बलवतामिन्द्रादीनामपि बलैस्तस्य बलमनिवार्य्यमधृष्यम् ॥ १४ ॥

तव त्वया ॥ १५ ॥

स खरो यस्मात् स्पष्टं तस्य रामस्य न भवति दैवतः अशरीरदेवता-

न स तस्य स्वरो व्यक्तं न कश्चिदपि दैवतः * ॥ १६ ॥
गन्धर्वनगरप्रख्या माया तस्य च रक्षसः ।
न्यासभूतासि वैदेहि! न्यस्ता मयि महात्मना ॥ १७ ॥
रामेण त्वं वरारोहे ! न त्वां त्यक्तमिहोत्सहे ।
कृतवैराश्च कल्याणि ! वयमेतैर्निशाचरैः ॥ १८ ॥
खरस्य निधने * देवि ! जनस्थानवधं प्रति ।
राक्षसा विविधा वाचो व्याहरन्ति * महावने ॥ १९ ॥

सम्बन्धी कश्चित् खर इत्यपि नेत्यर्थः । तदापि प्रश्ना युक्ता न त्वेवमपीत्यर्थः ॥ १६ ॥

किं तर्हि गन्धर्वनगरप्रख्या तद्वन्मिथ्या तस्य रक्षसो मायैव वञ्चनार्थं तत्कृतोऽयं स्वर इत्यर्थः । त्वं न्यासरूपतया मयि निक्षिप्तासि अतस्त्वां त्यक्तुं नोत्सहे इत्युत्तरेणान्वयः ॥ १७ ॥ १८ ॥

खरस्य निधने रामेण कृते सति जनस्थानवधं जनस्थानवर्त्तिसकपरिकररक्षोवधं प्रतिलक्ष्य कृतवैरा इत्यन्वयः । व्याहरन्ति अस्मद्व्यामोहनार्थमतस्त्वां त्यक्तुं नोत्सहे ॥ १९ ॥

---

* मायया केनचित् कृतः इति वा पाठः ।

• निधनादेव इति वा पाठः ।

* विसृजन्ति इति वा पाठः ।

हिंसाविहारा वैदेहि ! न चिन्तयितुमर्हसि ।
लक्ष्मणेनैवमुक्ता तु क्रुद्धा संरक्तलोचना ॥ २० ॥
अब्रवीत् परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ।
अनार्य्यकरुणारम्भ ! नृशंस ! कुलपांसन ! ॥ २१ ॥
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ।
रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ॥ २२ ॥
नैतच्चित्रं सपत्नेषु पापं लक्ष्मण ! यद्भवेत् ।
त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३ ॥
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २४ ॥

हिंसैव साधुजनपीडैव विहारो येषां ते तथा इदं पूर्वान्वयि । अतस्त्वं रामस्य क्षेमं न चिन्तयितुमर्हसि ॥ २० ॥

अनार्य्यकरुणारम्भ अनर्य्यया कुत्सितया करुणया रामव्यसनेऽपि मद्विषयया आरम्भो मदनुष्ठानारम्भो यस्य तत्सम्बोधनम् ॥ २१ ॥

तेन रामव्यसनप्रियत्वेन । अत्र रामव्यसनं रामस्य प्रतिज्ञातार्थस्य सर्व्वरक्षोवधरूपस्य हानिस्तत्प्रियत्वेनेति गूढं तात्पर्य्यम् । अत एषा मद्विषया करुणा अनार्य्या कुत्सिता प्रधानकार्य्यविरोधित्वादिति बोध्यम् ॥ २२ ॥

अथ पुनर्नटवदाह,—नैवेत्यादि । सपत्नेषु ज्ञातित्वात् ॥ २३ ॥

सुदुष्टः सुतरां दुष्टहृदयः ॥ २४ ॥

तत्र सिध्यति सौमित्रे ! तवापि भरतस्य वा।
कथमिन्दीवरश्यामं रामं पद्मनिभेक्षणम् ॥ २५ ॥
उपसंश्रित्य भर्त्तारं कामयेयं पृथग् जनम्।
समक्षं तव सौमित्रे ! प्राणांस्त्यक्ष्याम्यसंशयम् ॥ २६ ॥
रामं विना क्षणमपि नैव जीवामि भूतले।
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ॥ २७ ॥
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिस्स जितेन्द्रियः।
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥ २८ ॥
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि !।
स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते ॥ २९ ॥
विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः।
न सहे हीदृशं वाक्यं वैदेहि ! जनकात्मजे ! ॥ ३० ॥
श्रोत्रयोरुभयोर्मध्ये तप्तनाराचसन्निभम्।
उपशृण्वन्तु मे सर्वे साक्षिणो हि वनेचराः ॥ ३१ ॥

तत्र सिध्यति मत्स्पृहारूपम् ॥ २५ ॥
उपसंश्रित्य उपभुज्य ॥ २६ ॥ २७ ॥ २८ ॥
अप्रतिरूपमत्यन्तानुचितम् ॥ २९ ॥
तीक्ष्णाः क्रूराः भेदकराः। ह्रस्वो हे त्विति टः। सुतच्छादपिभाद-
रिति शेषः ॥ ३० ॥
वनेचरा देवा इति शेषः ॥ ३१ ॥

न्यायवादी यथावाक्यमुक्तोऽहं परुषं त्वया।
धिक्त्वामद्य विनश्यन्तीं यन्मामेवं विशङ्कसे ॥ ३२ ॥
स्त्रीत्वाद्दुष्टस्वभावेन गुरुवाक्ये व्यवस्थितः।
गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने! ॥ ३३ ॥
रक्षन्तु त्वां विशालाक्षि! समग्रा वनदेवताः।
निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे।
अपि त्वां सह रामेण पश्येयं पुनरागतः ॥ ३४ ॥
लक्ष्मणेनैवमुक्ता तु रुदन्ती जनकात्मजा।

अत्र परुषमुक्तस्तदुपालभ्य इति योजना। यत् यस्मात् मामेवं वागगोचरदुर्भाववन्तं विशङ्कसे तत एव दोषादद्य विनश्यन्तीमासन्नविनाशां विपरीतमतिं त्वां धिगित्यर्थः। अत्र नशेर्नाशेच्छार्थः तेन राक्षसकुलस्य नाशेच्छावतीं त्वां धिक्। यतो यदर्थं मामेवं विशङ्कसे वदसि इति गूढम्। यद्वा विनश्यन्तीं शक्तितया प्रतिज्ञायां परिणामरूपेण विनश्यन्तीं त्वां धिक्। यन्मां त्वदस्पृष्टं त्वदाक्रमणायोग्यमेव विशङ्कसे त्वदाक्रान्तेषु कितैवं सम्भावनेति ॥ ३२ ॥

पुनर्वचानुसारेणाह, स्त्रीत्वाद्दुष्टस्वभावेन क्रौर्येण युता त्वं गुरुवाक्ये ज्येष्ठनियोगे स्थितं मामेवं ब्रूषे इति शेषः। अतो यत्र काकुत्स्थस्तत्र गच्छामि गमिष्ये ते स्वस्त्यस्तु सर्वत इति शेषः ॥ ३३ ॥

यानि घोराणि निमित्तानि मे प्रादुर्भवन्ति तैस्त्वत्पीडां शङ्कमानोऽहं रामेण सह पुनरागतस्त्वां पश्येयम् एतदपि सम्भवेदित्यर्थः ॥ ३४ ॥

पिबामि वा विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम्।
प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता ॥ ३५ ॥
गोदावरीं प्रवेक्ष्यामि हीना रामेण लक्ष्मण!।
आबन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥ ३६ ॥

किमनेन सामान्यपुरुषप्रसङ्गः शंक्य इति मन्यमाना। स्वदार्ढ्यं प्रकाशयति,—लक्ष्मणेनेति ॥ ३५ ॥

आबन्धिष्ये रज्वा कण्ठमिति शेषः। विषमे स्थाण्वादिविषमे स्थित्वा ततः प्रपातेनेति शेषः ॥ ३६ ॥

सर्वथा कर्त्तव्यमर्थमाह, प्रवेक्ष्यामि हुताशनम्। अतएवात्र वा-शब्दानुक्तिः। अनेन सत्यात्मावरणाहं न गमिष्यामि किंत्वहं स्वरूपेणाग्नौ स्थित्वा माययैव तद्धस्तं गमिष्यामीति ध्वनितम्। तदुक्तं कूर्म-पुराणे,—

रामस्य सुभगां भार्य्यां रावणो राक्षसेश्वरः।
सीतां विशालनयनां चकमे कालनोदितः ॥
गृहीत्वा मायया वेषं चरन्तीं विजने वने।
समाहर्तुं मनश्चक्रे तापसः किल कामिनीम् ॥
विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् ॥

तद्भावं तच्छायामेव हृदि स्थितं तापसो भूत्वा हरिष्यामीति भाव-मित्यर्थः।

जगाम शरणं वह्निमावसथ्यं शुचिस्मिता।
प्रपद्ये पावकं देवं साक्षिणं विश्वतोमुखम्।

न त्वहं राघवादन्यं कदापि पुरुषं स्पृशे ॥ २७ ॥

आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥

इत्याद्यष्टश्लोकानुक्त्वा ।

इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी ।
ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥
अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः ।
आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव ॥
सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया ।
सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥
हत्वा तु रावणवधं रामो लक्ष्मणसंयुतः ।
समादायाभवत् सीतां शङ्काकुलितमानसः ॥
सा प्रत्ययाय भूतानां सीता मायामयी पुनः ।
विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ॥
दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ।
रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः ॥
एतत्पतिव्रतानां वै माहात्म्यं कथितं मया ।
स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतम् ॥

इति उत्तरखण्डे चतुस्त्रिंशेऽध्याये । अनेन स्त्रीणां जातिभ्रंशकरा-पदि अग्निप्रवेशो न दोषाय सर्वप्रायश्चित्तञ्चेति ध्वनितम् । कदाप्यन्यं पुरुषं न स्पृशे इत्यन्वयः । अत्र पत्यसान्निध्ये इति शेषः । तेन विराध-स्पर्शेऽपि न हानिः तदा पतिसन्निधानात् । किञ्च साक्षाद्भगवतीस्पर्शे रावणो विराधवत्तत्क्षणादेव म्रियेदेवं च सर्वराक्षसवधो न स्यादिति

इति लक्ष्मणमाश्रुत्य सीता शोकसमन्विता।
पाणिभ्यां रुदती दुःखादुदरं प्रजघान ह ॥ ३८ ॥
तामार्त्तरूपां विमना रुदन्तीं
सौमित्रिरालोक्य विशालनेत्राम्।
आश्वासयामास न चैव भर्तु-
स्तं भ्रातरं किञ्चिदुवाच सीता ॥ ३९ ॥
ततस्तु सीतामभिवाद्य लक्ष्मणः
कृताञ्जलिः किञ्चिदभिप्रणम्य।

* मायासीतारचना। ×-किञ्चास्य कार्य्यं हनुमत्पुच्छाग्निना लङ्कादाहः। अन्यथा रावणवशेन लोकपालाग्निना कथं लङ्कागरदाहः स्यात्। एत-च्छक्तिप्रवेशेन तु तत् कार्य्यसामर्थ्यं तस्येति मन्तव्यम्। किं चैवं प्रति-ज्ञाय रावणस्पर्शे जगन्मातुः प्रतिज्ञाभङ्गः स्यात् ॥ ३७ ॥

आश्रुत्य लक्ष्मणं प्रति प्रतिज्ञाय दुःखात् सकलकरणतापादिव उदरं प्रजघानेत्यनेन सर्वरक्षोमरणं विना न मे उदरपूर्त्तिरिति सूचितम्। अन्यथा शोके वक्षआघातस्यैव स्त्रीषु प्रसिध्यासङ्गतिः स्यात् ॥ ३८ ॥

विमनाः सौमित्रिस्तां रुदन्तीमार्त्तरूपामार्त्तस्येव लक्ष्यमाणाम् लोकानुसारत आश्वासयामास। सा च तं न किञ्चिदुवाच। आश्वा-सनव्याजेन गमनविलम्बं करोतीति कोपेनेति शेषः ॥ ३९ ॥

अभिवाद्य मनसेति शेषः। किञ्चिदभिप्रणम्येति कायिकः स उक्तः।

अवेक्षमाणो बहुशः स मैथिलीं
जगाम रामस्य समीपमात्मवान् ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे लक्ष्मण-
प्रयाणं नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

अत्र किञ्चिदित्यनेन कोपः सूचितः । यद्यपि कोपेऽपि यथोचितव्यव-
हारत्यागो लक्ष्मणस्यानुचितस्तथापि प्रतिज्ञोत्तरं तथैव स्वच्छायां सन्दर्श्य
तस्या अग्निप्रवेशोद्यमेन छायाबुध्या किञ्चित् प्राञ्जलित्वं किञ्चिदेव नमन-
मित्यनेन सूचितम् । कथमेनां रामेण विना त्यक्ष्यामीति बहुशो वेक्ष-
माणः अग्निं प्रविष्टा न वेति च वीक्षमाणः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ५४ ॥

---

# षट्चत्वारिंशः सर्गः ।

---

तथा परुषमुक्तस्तु कुपितो राघवानुजः ।
स विकाङ्क्षन् भृशं रामं प्रतस्थे न चिरादिव ॥ १ ॥
तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ।
अभिचक्राम वैदेहीं परिव्राजकरूपधृक् ॥ २ ॥
श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही ।
वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ॥ २ ॥

न चिरादिव शीघ्रमेवेत्यर्थः । विकाङ्क्षन् विशेषेण काङ्क्षायाः तत्सविधगमनमिच्छन्नित्यर्थः । काङ्क्षिः शङ्कायामपि तेन रामं विरुद्धं शङ्कमानः शीघ्रमितोऽनपसरणे कार्य्यनाशाद्रामोऽपि विरुद्धः स्यादिति शङ्कमानः शीघ्रं जगामेति व्यङ्ग्यम् । अतएव व्यवहितपूर्वसर्गान्ते मारीचस्य तथा शब्दोत्तरं सीताविषयां महतीं चिन्तामुक्त्वा ततः पुनरपि मांसार्थमितरमृगवधप्रवृत्तिरुक्ता सा विलम्बायैव ॥ १ ॥

तदा लक्ष्मणस्यापगमे अन्तरं रामलक्ष्मणयोरपसरणे गावकाशमासाद्य प्राप्य ॥ २ ॥

शिखी उपानहीति व्रीह्यादित्वादिनिः । अनेन त्रिदण्डिसन्यासिविशेषः सूचितः । तदुक्तं भारते—

रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक् ।

परिव्राजकरूपेण वैदेहीमन्ववर्त्तत ।
तामाससादातिबलो भ्रातृभ्यां रहितां वने ॥ ४ ॥
रहितां सूर्य्यचन्द्राभ्यां सन्ध्यामिव महत्तमः ।
तामपश्यत् ततो बालां राजपुत्रीं यशस्विनीम् ॥ ५ ॥
रोहिणीं शशिना हीनां ग्रहवद्द् भृशदारुणः ।
तमुग्रं पापकर्म्माणं जनस्थानगता द्रुमाः ॥ ६ ॥
समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ।
शीघ्रस्रोतास्तु तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ॥ ७ ॥
स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी ।
रामस्यत्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे ॥ ८ ॥
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ।
अभव्यो भव्यरूपेण भर्त्तारमनुशोचतीम् ॥ ९ ॥
अभ्यवर्त्तत वैदेहीं चित्रामिव शनैश्चरः ।

इति तत्र मुण्ड इत्यनेन जटिलत्वाद्युक्तिः । कुण्ड कमण्डलुः । यष्टिश्चिद-ण्डात्मिका । भ्रातृभ्यां परस्परभ्रातृभ्यां रामलक्ष्मणाभ्याम् ॥३॥ ४ ॥ ५ ॥

ग्रहवत् केतुवत् । तं संदृश्येत्यन्वयः ॥ ६ ॥

शीघ्रस्रोताः शीघ्रप्रवाहापि नदी तं वीक्षन्तं वीक्षमाणं दृष्ट्वा तद्भ-यात् स्तिमितं मन्दं गन्तुमारेभे इत्यन्वयः ॥ ७ ॥

अन्तरम् अपकारयोग्यं छिद्रं तदन्तरे उभयरहितदेशकाले ॥ ८ ॥

उपतस्थे अतिसमीपं प्राप्तेत्यर्थः । अनुशोचतीं तामिव ॥ ९ ॥

सहसा भव्यरूपेण हणैः कूप इवावृतः॥ १०॥
अतिष्ठत् प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम्।
तिष्ठन् संप्रेक्ष्य च तदा पत्नीं रामस्य रावणः॥ ११॥
शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम्।
आसीनां पर्णशालायां बाष्पशोकाभिपीड़िताम्॥ १२॥
स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम्।
अभ्यगच्छत वैदेहीं हृष्टचेता * निशाचरः॥ १३॥
दृष्ट्वा कामशराविद्धो ब्रह्मघोषमुदीरयन्।
अब्रवीत् प्रश्रितं वाक्यं रहिते राक्षसाधिपः॥ १४॥
तामुत्तमां त्रिलोकानां पद्महीनामिव श्रियम्।
विभ्राजमानां वपुषा रावणः प्रशशंस ह॥ १५॥
रौप्यकाञ्चनवर्णाभे! पीतकौशेयवासिनि!।
कमलानां शुभां मालां पद्मिनीव च बिभ्रती॥ १६॥

चित्रां चित्राख्यनक्षत्रम्। भव्यरूपेण परमशान्तयतिरूपेण॥१०॥११॥ बाष्पैः शोकेन चाभिपीड़िताम्। स्वयमसौ प्रविश्य मां रक्षसे दत्तवतीति शोकबाष्पौ। रामव्यसनशङ्कयेत्यापाततोऽर्थः॥ १२॥ १३॥ ब्रह्मघोषं ब्राह्मणत्वप्रत्यभिज्ञानाय वेदघोषमुदीरयन् कुर्वन् ॥१४॥१५॥ रौप्यकाञ्चनमुत्तमकाञ्चनम्॥ १६॥

---

* दुष्टचित्तः इति वा पाठः।

ह्रीः श्रीः कीर्त्तिः शुभा लक्ष्मीरप्सरा वा शुभानन ! ।
भूतिर्वा त्वं वरारोहे ! रतिर्वा स्वैरचारिणी ॥ १७ ॥
समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव ।
विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ॥ १८ ॥
विशालं जघनं पीनमूरू करिकरोपमौ ।
एतावुपचितौ वृत्तौ संहतौ संप्रगल्भितौ ॥ १९ ॥
पीनोन्नतमुखौ कान्तौ स्निग्धतालफलोपमौ ।
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ॥ २० ॥
चारुस्मिते ! चारुदति ! चारुनेत्रे ! विलासिनि ! ।
मनो हरसि मे रामे ! नदी कूलमिवाम्भसा ॥ २१ ॥
करान्तमितमध्यासि सुकेशी संहतस्तनी ।

ह्रीर्गौरी श्रीरैश्वर्य्यप्रधाना भगवच्छक्तिः । लक्ष्मीः सौभाग्यप्रधाना । भूतिरणिमादिसिद्धिः । रतिः कामपत्नी स्वैरचारिणीत्वं वने आगमनात् ॥ १७ ॥

प्रशशंसेत्यस्य प्रपञ्चः । समा इत्यादि । समा इति समसंस्थानाः शिखरिणः कुन्दकुड्मलवत् प्रशस्तायाः ॥ १८ ॥

संप्रगल्भितौ आलिङ्गनादौ सञ्जातप्रागल्भ्यौ । संप्रवल्गिताविति पाठे आलिङ्गनोद्यताविव्यर्थः ॥ १९ ॥

मणिप्रवेको मणिश्रेष्ठः ॥ २० ॥

नदी कर्त्री कूलं स्वकूलम् ॥ २१ ॥

नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ २२ ॥
नैवंरूपा मया नारी दृष्टपूर्वा महीतले ।
रूपमग्र्यञ्च लोकेषु सौकुमार्य्यं वयश्च ते ॥ २३ ॥
इह वासश्च कान्तारे चित्तमुन्माथयन्ति मे ।
सा प्रतिक्राम भद्रन्ते न त्वं वस्तुमिहार्हसि ॥ २४ ॥
राक्षसानामयं वासो घोराणां कामरूपिणाम् ।
प्रासादाग्राणि रम्याणि नगरोपवनानि च ॥ २५ ॥
सम्पन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ।
वरं माल्यं वरं गन्धं वरं वस्त्रञ्च शोभने ! ॥ २६ ॥
भर्त्तारञ्च वरं मन्ये त्वद्युक्तमसितेक्षणे ! ।
का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ! ॥ २७ ॥
वसूनां वा वरारोहे ! देवता प्रतिभासि मे ।
नेहागच्छन्ति गन्धर्वा न देवा न च किन्नराः ॥ २८ ॥

करान्तेनाङ्गुष्ठप्रदेशिनीचक्रप्रमाणेन मितं मध्यं यस्यास्तथाभूते ॥२२॥

रूपं सुकुमारता वयः कान्तारवास इति चत्वारि चित्तमुन्माथयन्ति विकृतं कुर्वन्ति प्रतिक्राम निर्गच्छ। रामचन्द्राधिष्ठितस्थाने राक्षसपराक्रमासंभवादेवं वचनम् ॥ २३ ॥ २४ ॥ २५ ॥

आचरितुमुपभोक्तुं त्वद्युक्तं त्वत्संयुक्तमाल्यादि वरम् अन्यत्तु विफलमिति भावः ॥ २६ ॥ २७ ॥ २८ ॥

राक्षसानामयं वासः कथं तु त्वमिहागता ।
इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा: ॥ २९ ॥
ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसे ।
मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् ॥ ३० ॥
कथमेका महारण्ये न बिभेषि वरानने ! ।
कासि कस्य कुतश्च त्वं किन्निमित्तञ्च दण्डकान ॥ ३१ ॥
एका चरसि कल्याणि ! घोरान् राक्षससेवितान् ।
इति प्रशस्ता वैदेही रावणेन दुरात्मना ॥ ३२ ॥
द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥ ३३ ॥
उपानीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ।
अब्रवीत् सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३४ ॥

द्वीपिव्याघ्रौ सबिन्दुनिर्बिन्दू ॥ २९ ॥

तरक्षुर्मृगादनः । बिभ्यसे बिभेषि ॥ ३० ॥ ३१ ॥

प्रशस्ता कृतप्रशंसा ॥ ३२ ॥

द्विजातिवेषेण समागतं रावणं दृष्ट्वा द्विजातिवेषोऽयं रावण इति ज्ञात्वापि अतिथिसत्कारैः अतिथियोग्यसत्कारैः पाद्येनाभिनिमन्त्र्य सत्कृत्य ॥ ३३ ॥

तदा पाद्यदानोत्तरकाले सौम्यदर्शनं तं सिद्धं पक्वमन्नमित्यब्रवीत् ॥ ३४ ॥

द्विजातिवेषेण समीक्ष्य मैथिली
समागतं पात्रकुसुम्भधारिणम्।
अशक्यमुद्द्वेष्टुमुपायदर्शनान्-
न्यमन्त्रयद् ब्राह्मणवत्तथागतम्॥ ३५॥

इयं वृसी ब्राह्मणकाममास्यताम्
इदञ्च पाद्यं प्रतिगृह्यतामिति।
इदञ्च सिद्धं वनजातमुत्तमं
त्वदर्थमव्यग्रमिहोपभुज्यताम्॥ ३६॥

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं
नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम्।
प्रसह्य तस्या हरणे दृढं मनः
समर्पयामास वधाय रावणः॥ ३७॥

पात्रं कमण्डलुः। कुसुम्भं तद्रक्तवस्त्रं तदुभयधारिणम्। उपायानां ब्राह्मणत्वप्रतिपत्त्यै रावणेन कृतानां काषायवस्त्रब्रह्मघोषदण्डादीनां दर्शनात् उद्वेष्टुमुपेक्षितुमशक्यमिति विचार्य्येति शेषः। तथागतं ब्राह्मणवेषेणागतं रावणं ब्राह्मणवदेव न्यमन्त्रयत्। पाठान्तरं त्वनाप्तत्वाच्चल्पितम् अयमेव रक्षःसंहारोपाय इति दर्शनादित्यपि गूढ़मत्र॥ ३५॥

निमन्त्रणप्रकारः। इयं वृसीत्यादि। वनजातं वन्यपदार्थजातं त्वदर्थमेव सिद्धं कृतं तदिहोपभुज्यताम्॥ ३६॥

एवं निमन्त्र्यमाणो रावणः आत्मवधाय स्वनाशाय तस्याः प्रसह्य

ततः सुवेषं मृगयागतं पतिं
प्रतीक्षमाणा सहलक्ष्मणं तदा ।
निरीक्षमाणा हरितं ददर्श तं
महद्वनं नैव तु रामलक्ष्मणौ ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावणस्य
रामाश्रमप्रवेशो नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

हरणे मनोदृढं निश्चितम् समर्पयामास सम्यग्वधाय कृतवानित्यर्थः ॥ ३७ ॥

सुवेषम् शोभनाकारं मृगयागतं मृगयां प्रति गतम् । हरितं श्यामम् ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीयेरामायणतिलके
आरण्यकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः ।

---

रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ॥ १ ॥
ब्राह्मणश्चातिथिश्चैष अनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्त्तन्तु सीता वचनमब्रवीत् ॥ २ ॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते रामस्य महिषी प्रिया ॥ ३ ॥
उषित्वा द्वादशसमा इक्ष्वाकूणां निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ ४ ॥
तत्र त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः ।
अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५ ॥

रावणेनत्विति । आत्मानं जिहीर्षुणा परिव्राजकरूपेण रावणेन पृष्टा वैदेही आत्मना स्वयमेवात्मानं शशंस ॥ १ ॥

ननु पूजामात्रं कर्त्तव्यं किं प्रतिवचनेनेत्याह,—ब्राह्मणश्चेति । एष अनुक्त इत्यार्षी सन्धिः । अनुक्तः अनुक्तप्रतिवचनः ॥ २ ॥ ३ ॥

सर्वकामसमृद्धिनी । व्रीह्यादित्वादिनिः ॥ ४ ॥

राजमन्त्रिभिः राज्ञो राज्यनिर्वाहकैर्मन्त्रिभिरित्यर्थः ॥ ५ ॥

तस्मिन् संभ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्त्तारं ममार्य्या याचते वरम् ॥ ६ ॥
परिगृह्य तु कैकेयी श्वशुरं सुकृतेन वै ।
मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ॥ ७ ॥
द्वावयाचत भर्त्तारं सत्यसन्धं नृपोत्तमम् ।
नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये च कदाचन ॥ ८ ॥
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ।
इति ब्रुवाणां कैकेयीं श्वशुरो मे स पार्थिवः ॥ ९ ॥
अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा ।
मम भर्त्ता महातेजा वयसा पञ्चविंशकः ॥ १० ॥

संभ्रियमाणे सम्पाद्यमानसंभारे इत्यर्थः । भर्त्तारं दशरथं ममार्य्या मम पूज्या श्वश्रूः । अनार्य्येति क्वचित् पाठः ॥ ६ ॥

मे श्वशुरं सुकृतेन परिगृह्य वरकृपेण सुकृतेन वशीकृत्य । यद्वा धर्मेण ग्राहयित्वेत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमिति ॥७॥

द्वौ वरावयाचत ॥ ८ ॥ ९ ॥

अन्वर्थैरनुगतार्थैः सप्रयोजनैरुपभोगक्षमैरर्थैरयाचत । सर्वाण्युत्तमवस्तूनि तुभ्यं दास्यामि रामाभिषेचने विघ्नं माकुर्विति याच्यमाना न याच्ञां चकार नाङ्गीकृतवती । वयसा पञ्चविंशकः वननिर्गमनकाले इति शेषः । नन्विदमयुक्तम् ऊनषोडशवर्षोऽयमिति विश्वामित्रं प्रति दशरथोक्तेः । उषित्वा द्वादशसमा इति वक्ष्यमाणत्वेनेति चेन्न । अस्यान्त-

अष्टादश हि वर्षाणि मम जन्मनि गण्यते ।
रामेति प्रथितो लोके सत्यवान् शीलवान् शुचिः ॥ ११ ॥
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ।
कामार्त्तश्च महाराजः पिता दशरथः स्वयम् ॥ १२ ॥
कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ।
अभिषेकाय तु पितुः समीपं राममागतम् ॥ १३ ॥
कैकेयी मम भर्त्तारमित्यवाच दृढ़ं वचः ।
तव पित्रा समाज्ञप्तं ममेदं शृणु राघव ! ॥ १४ ॥
भरताय प्रदातव्यमिदं राज्यमकण्टकम् ।
त्वया तु खलु वस्तव्यं नववर्षाणि पञ्च च ॥ १५ ॥

रत्वात् । अतितरुणावस्थायामपि राज्यं त्यक्तवानित्यर्थे तात्पर्य्यव्याख्यया तथोक्तेः । यद्वाऽतिक्रान्तपञ्चविंशक इत्यर्थः । मम भर्त्ता वयसा महातेजाः अतितरुण इत्यर्थः । पञ्चविंशकः सांख्यसिद्धं पञ्चविंशं तत्त्वं चैतन्यं सोऽयमेव । एतच्चैतन्येनैव जगद्व्याप्तं न ततोऽधिकं किञ्चिदस्तीति सूचयितुं तथोक्तेरिति तत्त्वम् ॥ १० ॥

तथा मम जन्मतो वनप्रवेशसमयेऽतीतानीत्यर्थः । गण्यत इत्यार्षमेकत्वं मम पञ्चतन्मात्रपञ्चमहाभूतपञ्चेन्द्रियाहंकारबुद्धिमनोरूपाणि अष्टादश वर्षाणि पर्वाणि जन्मनि कार्य्ये गण्यन्त इति तन्मूलीभूता प्रकृतिरहमिति सूचितम् ॥ ११ ॥

कामार्त्तः कैकेयीकामार्त्तः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

वने प्रव्रज काकुत्स्थ ! पितरं मोचयानृतात् ।
तथेत्युवाच तां रामः कैकेयीमकुतोभयः ॥ १६ ॥
चकार तद्वचः श्रुत्वा भर्त्ता मम दृढ़व्रतः ।
दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् ॥ १७ ॥
एतद् ब्राह्मण ! रामस्य व्रतं ध्रुतमनुत्तमम् ।
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्य्यवान् ॥ १८ ॥
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ।
स भ्राता लक्ष्मणो नाम ब्रह्मचारी दृढ़व्रतः ॥ १९ ॥
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ।
जटी तापसरूपेण मया सह सहानुजः ॥ २० ॥
प्रविष्टो दण्डकारण्यं धर्मनित्यो दृढ़व्रतः ।
ते वयं प्रच्युता राज्यात् कैकेय्यास्तु कृते त्रयः ॥ २१ ॥
विचराम द्विजश्रेष्ठ ! वनं गम्भीरमोजसा ।
समाश्वस मुहूर्त्तन्तु शक्यं वस्तुमिह त्वया ॥ २२ ॥

अनृतान्मोचय तद्दत्तवरानुपालनेनेति शेषः ॥ १६ ॥ १७ ॥

वैमात्रः शुभ्रादिषु विमातृशब्दपाठेऽपि आर्षोऽण् । असहोदरो भ्रातेत्यर्थः । विभिन्नाया मातुरपत्यं वैमात्रः ॥ १८ ॥ १९ ॥ २० ॥

कैकेय्याः कृते तन्निमित्तम् ॥ २१ ॥

यदि वस्तुं शक्यं तर्हि मुहूर्त्तं समाश्वस विश्रमं कुर्वित्यर्थः ॥ २२ ॥

आगमिष्यति मे भर्त्ता वन्यमादाय पुष्कलम् ।
रुरून् गोधान् वराहांश्च हत्वादायामिषं बहु ॥ २३ ॥
स त्वं नाम च गोत्रञ्च कुलमाचक्ष्व तत्त्वतः ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ! ॥ २४ ॥
एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः ।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २५ ॥
येन वित्रासिता लोकाः सदेवासुरमानुषाः ।
अहं स रावणो नाम सीते ! रक्षोगणेश्वरः ॥ २६ ॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ! ॥ २७ ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २८ ॥
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ २९ ॥
तत्र सीते ! मया सार्द्धं वनेषु विचरिष्यसि ।

हत्वा आदायेति च्छेदः । आदनमादस्तदर्थमित्यर्थः ॥ २३ ॥
गोत्रमार्षं कुलं प्रसिद्धवंशस्तत्तम् । यद्वा गोत्रं पितृकुलं कुलं मातुः
। २४ । २५ । २६ ॥
दृष्ट्वा पूर्वं श्रुत्वा अद्य दृष्ट्वा चेत्यर्थः ॥ २७ । २८ । २९ ॥

न चास्य वनवासस्य स्पृहयिष्यसि भामिनि! ॥ २० ॥
पञ्चदास्यः सहस्राणि सर्वाभरणभूषिताः।
सीते! परिचरिष्यन्ति भार्य्या भवसि मे यदि ॥ २१ ॥

वनेषु उपवनेषु ॥ २० ॥

पञ्चेत्यादि। रक्षोयोनौ तमोगुणप्रधानायां जातत्वात् उद्रिक्त-तमसा भगवन्मायया ज्ञानाच्छादनादेवमुक्तिः। सर्वथा तत्त्वज्ञो रावणः कथमेवं वदेदिति तु श्रद्धाजाड्यमेव। तत्त्वज्ञचिह्नानुपलम्भात्। सीता-रामौ सर्वेश्वरावित्येतन्मात्रज्ञानं रावणस्यास्त्येवेत्यपि श्रद्धाजाड्यमेव। विष्णुपुराणादिविरोधात्। तथा चोक्तं विष्णुपुराणे—मैत्रेय उवाच।

हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना।
अवाप निहतो भोगानप्राप्यानमरैरपि॥
न लयं तत्र तेनैव निहतः स कथं पुनः।
संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ॥
एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर।
कौतूहलपरेणैतत् पृष्टो मे वक्तुमर्हसि॥

पराशर उवाच। दैत्येश्वरस्य तु वधायाखिललोकोत्पत्तिस्थिति-विनाशकारिणाऽपूर्वतनुं गृह्णता नृसिंहरूपमाविष्कृतम्। तत्र हिरण्य-कशिपोर्विष्णुरयमित्येवं न मनस्यभूत्। निरतिशयपुण्यजातसंभूतमेतत् सत्त्वमिति रजोद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात् ततोवाप्तवधहेतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसम्पदम-वाप। नातस्तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालम्बनीकृते मनस-

रुत्र स्वयम् । दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत् । नायमच्युत इत्यासक्तिर्विपद्य-तोऽन्तःकरणस्य मानुषबुद्धिरेव केवलमभूत् । विपद्यत इति विपद्यतोऽपीत्यर्थः । तस्मिन्नपि समये विष्णुत्वबुद्धिर्नासीदिति भावः । पुनरच्युत-विनिपातनमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुलजन्माव्याहतं चैश्वर्यं शिशुपालत्वे चावाप । तत्र त्वखिलान्येव भगवन्नामकारणानि अभवन् । नामानि गोविन्दादीनि कारणानि गवां रक्षणादीनीत्यर्थः । ततश्च तत्कारणकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्म-संवर्द्धितविद्वेषानुबन्धिचित्तो विनिन्दन् सन्तर्जनादिषूच्चारणमकरोत् तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूर-कटकोपशोभितमुदारपीवर-चतुर्बाहुशङ्खचक्रगदाधरमतिप्रौढ़वैरानुभा-वादटनभोजनस्नानासनशयनादिष्ववस्थान्तरेषु नवापययावस्यात्मचेतसः ततस्तमेवानुक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाय भगवदस्त्रच-क्रांशुमालोज्ज्वलमक्षय्यतेजःस्वरूपं परमब्रह्मस्वरूपमपगतरागद्वेषादिदोषं भगवन्तम् अद्राक्षीत् । तावच्च भगवच्चक्रेणाशु व्यापादितः । तेन तत्-स्मरणदग्धाखिलाघसञ्चयो भगवतैवान्तमुपनीतस्तस्मिन्नेव लयमुपययौ एतत्तवाभिहितं भगवानिह कीर्त्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिल-सुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यक्भक्तिमन्तमिति । लोक-दृष्ट्या तु सीतासादृश्यात् सीताबुध्याहरणाच्चाततायित्वसंपत्त्या तद्वधे भग-वतः प्रवृत्तिः । एवञ्च हंटशोक्तीनां यद्वा तद्वा प्रकारेणान्यथायोजन-प्रयासस्तीर्थादीनां विफल एव । विष्णुपुराणोक्तरीत्यैव भागवते उक्तम्—

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ॥

इति । एते इत्यनेन पूर्वोक्ता अवतारा ऋष्यादयश्च परामृश्यन्ते । पुंसः

परमेश्वरस्य तत्रावतारा अंशा ऋष्यादयः कलाः। यद्यपि कृष्णोऽप्यंश एव। तत्रैव दशमे—

तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः।

इत्याद्युक्तेः।

उज्जहारात्मनः केशौ सितकृष्णौ महामुने।

इति विष्णुपुराणाद्युक्तेः। द्वितीये भागवतेऽप्येवमेव भारतेऽप्येवमेव। एतेन तत्रांशेनावतीर्णस्येत्यादि दशमस्थश्लोकव्याख्यानमपास्तम्। तथापि तत्तत्कारणकृतनाम्नां तत्र लाभाद् बहुशोऽज्ञानकार्य्यनाटनाच्च शङ्खचक्रादीनां प्रत्यक्षतो दर्शनाच्च स्वयं भगवानित्युक्तिः। नैतावता रामाद्यवताराणां ततो न्यूनत्वमिति भ्रमः कार्य्यः। श्रीधरोऽपि मत्स्याद्यवताराणां सर्वज्ञत्वसर्वशक्तिमत्वेऽपि यावदुपयोगमेव ज्ञानशक्त्याविष्कारः। अज्ञानाविष्कारस्य बहुशः। कृष्णत्वन्त्योऽल्पः। यथा अभिमन्युमरणे नाहं तत्र सन्निहित आसमतस्तस्य मरणमिति। यथा द्रौपद्याः सभायां नयनकाले नाहं द्वारकायां सन्निहितः किन्तु सौभवधार्थं गतोऽतो भवतामयं क्लेश इति। सौभवधे च मायिकं मृतवसुदेवशरीरं दृष्ट्वा मोह इत्याद्यज्ञानगाध्यमल्पम्। रामावतारेऽपि ज्ञानाविष्कारस्तत्र तत्र दर्शितो दर्शयिष्यते च। अवतारास्तेमे विराज एवांशाः भागवते प्रथमे तृतीयेऽध्याये—

जगृहे पौरुषं रूपं भगवान् महदादिभिः।
संभूतं षोड़शकलमादौ लोकसिसृक्षया॥

इत्यादिना वैराजं रूपमुक्ता।

एतन्नानावताराणां निधानं बीजमव्ययम्।
यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः॥

रावणेनैवमुक्ता तु कुपिता जनकात्मजा।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम्॥ ३२॥
महागिरिमिवाकम्प्यं महेन्द्रसदृशद्युतिम्।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता॥ ३३॥
सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम्।
सत्यसन्धं महाभागमहं राममनुव्रता॥ ३४॥
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम्।

इत्युक्तेः। एतदुक्तं वैराजं निधानं कार्य्यावसाने प्रवेशस्थानं बीज-मुद्गमकारणम्। अव्ययं स्वयं चिरस्थायि न केवलमवताराणामेव बीजं किन्तु सर्वेषामित्याह, यस्येति। यद्यपि विराट् जीव एव तथापि तदन्तर्यामिणस्तथोपासनायैवमुक्तम्। सितकृष्णकेशोद्धारेण च तेषां मूर्धन्यत्वेन मुख्यत्वात्तद्वन् मुख्ययोः प्रधानयोर्मदंशयोस्तत्त्वङ्गयोस्तद्वर्णयो-र्वैकुण्ठस्थभूतलस्थयोर्विष्णुशेषयोरवतार इति सूचितमत एवान्ते कृष्णं प्रति देवदूतेन त्वां विना स्वर्गो न शोभतेऽतस्त्वमागच्छेति निवेदितमिति स्पष्टं पुराणेषु। अत्र रामं प्रत्यपि तथैवोक्तम्। अंशत्वं चैषामैपा-धिकं मायायाः सांशत्वादित्यलम्॥ ३१॥

रावणेनेति। कुपिता कुपितेव॥ ३२॥

पर्वतसमुद्रोपमाभ्यां धैर्य्यगाम्भीर्य्ये दर्शिते॥ ३३॥

न्यग्रोधपरिमण्डलं तत्सदृशपरिणाहं तद्वत् सर्वाश्रयश्च राममुद्दि-श्यानुसरणमेव व्रतं यस्याः सा॥ ३४॥

नृसिंहं सिंहसङ्काशमहं राममनुव्रता ॥ ३५ ॥
पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्त्तिं महाबाहुमहं राममनुव्रता ॥ ३६ ॥
त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ३७ ॥
पादपान् काञ्चनान्नूनं बहून् पश्यसि मन्दभाक् ! ।
राघवस्य प्रियां भार्य्यां यस्त्वमिच्छसि राक्षस ! ॥ ३८ ॥
क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः ।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३९ ॥
मन्दरं पर्वतश्रेष्ठं पाणिना हर्त्तुमिच्छसि ।
कालकूटविषं पीत्वा स्वस्ति मां गन्तुमिच्छसि ॥ ४० ॥

सिंहस्य विक्रान्तं पदक्षेपस्तद्वत् पदनिक्षेपेण सगर्वगमनशीलम् । सिंहसंकाशं पराक्रमे इति भावः । नृसिंहमित्यस्य हिरण्यकशिपु-हन्तृत्वं व्यंग्यम् ॥ ३५ ॥

राजा चासौ वत्सः श्रेष्ठराजस्तम् । यद्वा दशरथपुत्रम् ॥ ३६ ॥

यथा आदित्यप्रभा आदित्यात् पृथक्कृत्य केनापि स्प्रष्टुमशक्या तथाहं शक्तिशक्तिमतोरवियोगादिति गूढम् ॥ ३७ ॥

काञ्चनवृक्षदर्शनं मुमूर्षुलक्षणम् । मन्दं क्षीणमायुरादि भजति स मन्दभाक् ॥ ३८ ॥

अचि सूच्या प्रमृजसि जिह्वया लेढ़ि च क्षुरम् ।
राघवस्य प्रियां भार्य्यामधिगन्तुं त्वमिच्छसि ॥ ४१ ॥
अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि ।
सूर्य्यचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ॥ ४२ ॥
यो रामस्य प्रियां भार्य्यां प्रधर्षयितुमिच्छसि ।
अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ॥ ४३ ॥
कल्याणवृत्तां यो भार्य्यां रामस्याहर्तुमिच्छसि ।
अयोमुखानां शूलानां मध्ये * चरितुमिच्छसि ।
रामस्य सदृशीं भार्य्यां योऽधिगन्तुं त्वमिच्छसि ॥ ४४ ॥

यदन्तरं सिंहसृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ॥ ४५ ॥
सुराग्र्यसौवीरकयोर्यदन्तरं
तदन्तरं दाशरथेस्तवैव च ।

क्षुधितस्य सिंहस्य सर्पस्य वदनाद्दंष्ट्राग्रहणेच्छासदृशी मदिच्छा एषु सर्वत्र निदर्शनालङ्कारः ॥ ३९ ॥ ४० ॥

लेढ़ि लेक्षि ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

स्यन्दनिका क्षुद्रनदी ॥ ४५ ॥

---

* अग्रे इति वा पाठः ।

यदन्तरं काञ्चनसीसलोहयो-
र्यदन्तरं चन्दनवारिपङ्कयोः ॥ ४६ ॥
यदन्तरं हस्तिबिडालयोर्वने
तदन्तरं दाशरथेस्तवैव च ।
यदन्तरं वायसवैनतेययो-
र्यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं सारसगृध्रयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४७ ॥
तस्मिन् सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
आज्यं * यथा मक्षिकयाऽवगीर्णम् ॥ ४८ ॥
इतीव तद्वाक्यमदुष्टभावा
सुदुष्टमुक्ता रजनीचरं तम् ।

सुराग्रमम्लतम् । सौवीरकमारनालं काञ्जिकम् । काञ्चनसीसरूपलोहयोरित्यर्थः ॥ ४६ ॥

हस्ती गजः । बिडालो मार्जारः मद्गुर्जलकाकः ॥ ४७ ॥

जरां जीर्णावस्थां सुखोदर्कां मक्षिकयावगीर्णं भुक्तमाज्यं यथा तां नाश्नयति तद्वत् ॥ ४८ ॥

---

* वज्रं इति वा पाठः ।

गात्रप्रकम्पाद् व्यथिता बभूव
वातोद्धुता सा कदलीव तन्वी ॥ ४९ ॥
तां वेपमानामुपलक्ष्य सीतां
स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम च कर्म चात्मनः
समाचचक्षे भयकारणार्थम् ॥ ५० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रावणं प्रति भर्त्सनं नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

इतीव इत्येवं बहुरूप अत्यन्तदुःखजनकं तत्पूर्वोक्तं वाक्यम् । वातोद्धुता महावातप्रकंप्यमाना ॥ ४९ ॥

भयकारणार्थं भयोत्पादनार्थम् ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीयेरामायणतिलके आरण्यकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## अष्टचत्वारिंशः सर्गः।

एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः।
ललाटे भ्रुकुटिं कृत्वा रावणः प्रत्युवाच ह ॥ १ ॥
भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि!।
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥
यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः।
विद्रवन्ति सदा भीता मृत्योरिव सदा प्रजाः ॥ ३ ॥
येन वैश्रवणो भ्राता वैमात्रः कारणान्तरे।
द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४ ॥

एवमिति। परुषं क्रोधावेशेन वर्णानां चर्वणेनैवोच्चारणात् श्रुतिकटु अक्षरमित्यर्थः। संरब्धः क्रुद्धः ॥ १ ॥

सापत्नः शिवाद्यण्। सापत्नेय इति पाठे मातृसपत्नीपुत्रत्वे प्रसिद्ध इत्यर्थः। भ्रातेत्यत्र च साक्षादिति तदा पाठः। एतेन कुलप्राशस्त्यमुक्तम् ॥ २ ॥ ३ ॥

वैमात्रः प्राग्वद् द्वैमात्र इति पाठे द्वितीया माता द्विमाता तदपत्यमित्यर्थे मातुरुदित्युत्वाभाव आर्षः। अस्य द्विशब्दस्य द्विपूरणार्थत्वेऽपि संख्यार्थत्वाभावान्नोत्तमित्यन्ये। कारणान्तरे निमित्तविशेषे। द्वन्द्वं द्वन्द्वयुद्धम् आसादितः प्रापितः ॥ ४ ॥

मद्भयार्त्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्व्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥
यस्य तत् पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्य्यादावर्जितं भद्रे ! येन यामि विहायसम् ॥ ६ ॥
मम सञ्जातरोषस्य मुखं दृष्ट्वैव मैथिलि ! ।
विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७ ॥
यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ।
तीव्रांशुः शिशिरांशुश्च भयात् संपद्यते दिवि ॥ ८ ॥
निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः ।
भवन्ति यत्र तत्राहं तिष्ठामि च चरामि च ॥ ९ ॥
मम पारे समुद्रस्य लङ्का नाम पुरी शुभा ।
संपूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥ १० ॥
प्राकारेण परिक्षिप्ता पाण्डुरेण विराजिता ।
हेमकक्ष्या पुरी रम्या वैदूर्य्यमयतोरणा ॥ ११ ॥

स्वमधिष्ठानं स्वां पुरीं लङ्कां कैलासाश्रयणं प्रबलाश्रयणबुद्ध्या ॥ ५ ॥
येन पुष्पकेन। वीर्य्यादावर्जितम् आच्छिद्य गृहीतं मयेति शेषः ॥६॥७॥
तीव्रांशुरपि मम भयाच्छिशिरांशुः सम्पद्यते ॥ ८ ॥
यत्र चरामि येन मार्गेण गच्छामीति यावत्। यत्र च तिष्ठामि तत्र भवन्तीत्यन्वयः ॥ ९ ॥
समुद्रस्य पारे मम लङ्का नाम पुरीत्यन्वयः ॥ १० ॥

हस्त्यश्वरथसम्बाधा तूर्य्यनादविनादिता ।
सर्वकामफलैर्वृक्षैः संकुलोद्यानभूषिता ॥ १२ ॥
तत्र त्वं वस हे सीते ! राजपुत्रि ! मया सह ।
न स्मरिष्यसि नारीणां मानुषीणां मनस्विनि ! ॥ १३ ॥
भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि ! ।
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १४ ॥
स्थापयित्वा प्रियं पुत्रं राज्ये दशरथो नृपः ।
मन्दवीर्य्यस्ततो ज्येष्ठः सुतः प्रस्थापितो वनम् ॥ १५ ॥
तेन किं भ्रष्टराज्येन रामेण गतचेतसा ।
करिष्यसि विशालाक्षि ! तापसेन तपस्विना ॥ १६ ॥

प्राकारस्य पाण्डुरत्वं सुधालेपाद्राजतत्वाद्वा हेम्नः कक्ष्या अवच्छेदा यस्यां सा । तोरणं पुरद्वारम् ॥ ११ ॥ १२ ॥

मानुषीणां नारीणां न स्मरिष्यसि । शेषे षष्ठी । मन्नगरे दिव्यनारीसमागमादिति भावः । युगपन्मानुषदिव्यभोगस्तत्रान्यत्र तूभयं युगपद्दुर्लभमिति भावः ॥ १३ ॥

गतायुषः एकादशसहस्रसंख्यया मितायुषः खरादिवधजक्रोधेन मया वधाद्वा तत्त्वम् ॥ १४ ॥

यो रामो मन्दवीर्य्य इति ज्ञात्वा ज्येष्ठोऽपि राज्ये प्रियं भरतं स्थापयित्वा वनं प्रस्थापितः ॥ १५ ॥

तेन गतचेतसा किं करिष्यसीत्यन्वयः । भ्रष्टराज्यत्वाच्चेतोहीनत्वं

रक्ष राक्षसभर्त्तारं कामय स्वयमागतम् *।
न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि॥ १७॥
प्रत्याख्याय हि मां भीरु! पश्चात्तापं गमिष्यसि।
चरणेनाभिहत्येव पुरूरवसमुर्वशी॥ १८॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः।
तव भाग्येन संप्राप्तं भजस्व वरवर्णिनि!॥ १९॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना।
अब्रवीत् परुषं वाक्यं रहिते राक्षसाधिपम्॥ २०॥
कथं वैश्रवणं देवं सर्वदेवनमस्कृतम्।

तापसेन तपस्विना तापसश्रेष्ठतपस्विना। यद्वा तापसेन श्रेष्ठत्वेन तपस्विना असुरेण॥ १६॥

रक्ष रक्षणे रक्ष पालय॥ १७॥

उर्वशी पुरूरवसं चरणेनाभिहत्य यथा पश्चात्तापं गतेति पुराणेषु प्रसिद्धं तथा पश्चात्तापं गमिष्यसि॥ १८॥

अङ्गुल्या न समः अङ्गुलीबलेनापि तुल्यो न अनेन मयानीतां पुना-राम आनयिष्यतीति न शंक्यमिति भावः। संप्राप्तं मामिति शेषः॥ ॥ १९॥ २०॥

---

* कामात् स्वयमिहागतम् इति वा पाठः।

भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१ ॥
अवश्यं विनशिष्यन्ति सर्वे रावण ! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥
अपहृत्य शचीं भार्य्यां शक्यमिन्द्रस्य जीवितुम् ।
न हि रामस्य भार्य्यां मामानीय स्वस्तिमान् भवेत् * ।
जीवेच्चिरं वज्रधरस्य हस्तात्
शचीं प्रधृष्याप्रतिरूपरूपाम् ।

रहिते रामरहिते आश्रमे स्थितेति शेषः । इक्ष्वाकुवंशस्येदृशं कृत्यमनुचितमिति मिथ्यैवान्यवंशं स्ववंशत्वेन कथयसीति व्यंग्यम् ॥ २१ ॥

एवंभूतराज्ञः प्रजानां सर्वथानाशः । मम नयने सर्वजीवितच्छेद एवेति भावः ॥ २२ ॥ २३ ॥

अप्रतिरूपरूपाम् अनुपमसौन्दर्य्यां मोक्षः मृत्योरिति शेषः । अतिमलिनान्तःकरणत्वात् मोक्षोऽज्ञानैकप्राप्यस्तव नास्त्येवेति भावः ॥२४॥

अत्र सर्गे रावणोक्तौ—

सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः ।
पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व माम् ॥

इति श्लोकः क्वचित् पठ्यते तमेवं व्याचक्षते । सप्तसप्तकं षडङ्गसहितवेदोपवेदसहितचतुर्दशविद्यारूपं तद्वेत्ता । अष्टाष्टकविभूषितः । चतुःषष्टिकलाभूषितः । पञ्चपञ्चकतत्त्वज्ञः पञ्चविंशतितत्त्वज्ञः । पञ्च-

* अपनीयास्मिजीवितम् इति वा पाठः ।

न माहृशीं राक्षस! धर्षयित्वा
पीतामृतस्यापि तवास्ति मोक्षः॥ २४॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे जनकी-रावणसंवादो नाम अष्टचत्वारिंशः सर्गः॥ ४८॥

विंशतितत्त्वस्वरूपवेत्ता नित्यानित्यवस्तुविवेकवानिति यावत्। इति कतकाद्यव्याख्यातत्वात् प्रक्षिप्त इति ज्ञायते। आद्यपादे अर्थासङ्गतिरपि परपादपर्य्यालोचनया तृतीयपादोक्तज्ञानवत ईदृशे कर्मणि प्रवृत्ति-रप्यनुचितेति भाति।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे अष्टचत्वारिंशः सर्गः॥ ४८॥

---

# एकोनपञ्चाशः सर्गः ।

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं समाहन्य चकार सुमहद्वपुः ॥ १ ॥
स मैथिलीं पुनर्वाक्यं बभाषे वाक्यकोविदः ।
नोन्मत्तया श्रुतौ मन्ये मम वीर्य्यपराक्रमौ ॥ २ ॥
उद्वहेयं भुजाभ्यान्तु मेदिनीमम्बरे स्थितः ।
आपिबेयं समुद्रञ्च मृत्युं हन्यां रणे स्थितः ॥ ३ ॥
अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् ।

हस्ते हस्तं समाहन्य समाहत्येत्यर्थः । विनिष्पीड्येति यावत् । मद्वि-षादयस्त्वियैव हतात्वया कदाचिदेषा हरणसमये क्रौर्य्यं कुर्य्यादिति शङ्कया क्रूरस्वीयमहद्रूपाङ्गीकारः । यद्वा कपटेनापि शान्तस्वभावयति-वेषधारणात्तद्वेषस्वाभाव्येन हरणे स्वस्य प्रतिबद्धतां दृष्ट्वा स्वरूपग्रहणम् । मम रावणस्यापि अयं वेषः क्रौर्य्यप्रतिबन्धक इत्यतस्च हस्ते हस्ताघात इत्यतस्च बोध्यम् ॥ १ ॥

न श्रुतौ अग्रे वक्ष्यमाणाविति शेषः ॥ २ ॥

तानेवाह,—उद्वहेयमित्यादि । आपिबेयमिति ॥ ३ ॥

कामेन चित्तजेन रूपेण च उन्मत्ते इत्यर्थः ॥ ४ ॥

कामरूपेण उन्मत्ते ! पश्य मां कामरूपिणम् * ॥ ४ ॥
एवमुक्तवतस्तस्य रावणस्य शिखिप्रभे ।
क्रुद्धस्य हरिपर्य्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५ ॥
सद्यः सौम्यं परित्यज्य तीक्ष्णरूपं स रावणः ।
स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ६ ॥
संरक्तनयनः श्रीमांस्तप्तकाञ्चनभूषणः ।
क्रोधेन महताविष्टो नीलजीमूतसन्निभः ॥ ७ ॥
दशास्यो विंशतिभुजो बभूव क्षणदाचरः ।
स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ ८ ॥
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः ।
* रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् ॥ ९ ॥

हरिपर्य्यन्ते श्यामप्रान्ते ॥ ५ ॥
सौम्यं भिक्षुरूपं तीक्ष्णरूपं प्रशस्ततीक्ष्णरूपं मृत्युतुल्यरूपं भेजे ॥
॥ ६ ॥ ७ ॥
परिव्राजकच्छद्म कपटपरिव्राजकरूपम् ॥ ८ ॥ ९ ॥

---

* कामरूपिणमुन्मत्ते पश्य मां कामदं पतिम् । इति वा पाठः ।
* संरक्तनयनः क्रोधात् जीमूतनिचयप्रभः ।
इत्यतिरिक्तं पाश्चात्त्याः ।

स तामसितकेशान्तां भास्करस्य प्रभामिव।
वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत्॥ १०॥
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि।
मामाश्रय वरारोहे! तवाहं सदृशः पतिः॥ ११॥
मां भजस्व चिराय त्वमहं श्लाघ्यः पतिस्तव।
नैव चाहं क्वचिद्भद्रे! करिष्ये तव विप्रियम्॥ १२॥
त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम्।
राज्याच्च्युतमसिद्धार्थं रामं परिमितायुषम्॥ १३॥
कैर्गुणैरनुरक्तासि मूढे! पण्डितमानिनि!।
यः स्त्रियो वचनाद्राज्यं विहाय ससुहृज्जनम्॥ १४॥
अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः।
इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम्॥ १५॥
अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः।
जग्राह रावणः सीतां बुधः खे रोहिणीमिव॥ १६॥

भास्करस्य प्रभामिव तस्या अपि पर्य्यन्ते श्यामरूपतायाः छान्दोग्ये उक्तेः॥ १०॥ ११॥ १२॥

मानुषो भावः मनुष्यरामविषयको भावः स्नेहबन्धः॥ १३॥ १४॥

प्रियवादिनीं रावणादन्यत्रेति शेषः॥ १५॥

काममोहितो जग्राहेत्यत्यन्तानौचित्ये दृष्टान्तः बुधः खे रोहिणी-

वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना॥ १७॥
तं दृष्ट्वा गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाभुजम्।
प्राद्रवन् मृत्युसंकाशं भयार्त्ता वनदेवताः॥ १८॥
स च मायामयो दिव्यः खरयुक्तः खरस्वनः।
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः॥ १९॥
ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वनः।
अङ्केनादाय वैदेहीं रथमारोहयत्तदा॥ २०॥
सा गृहीतातिचुक्रोश रावणेन यशस्विनी।
रामेति सीता दुःखार्त्ता रामं दूरगतं वने॥ २१॥

मिव। खे आकाशे शून्ये च रोहिण्योः बुधो रोहिणीं स्वमातरं यदि कामाद् गृह्णीयात् तदा तत्सदृशमिदं घोरं यद्यनयोक्तौ च कल्पनमित्यतिशयोक्तिश्च व्यंग्या। सीतया सद्यो मरणापर्यवसायि शापदानन्तु समूलनाशस्य वेदवत्यंशेन प्रतिज्ञातस्य निर्वाहाय ऋषीणां देवानामग्रे रामप्रतिज्ञातस्य च निर्वाहाय॥ १६॥

वामेनेति। अननुरक्ततया शापदानभिया स्ववामाङ्गास्पर्शनिवारणायैवं ग्रहणमित्याहुः॥ १७॥ १८॥ १९॥

परुषैः इतःपरं रामप्रत्याशा त्याज्येत्येवमादिभिः। अङ्केन हस्तान्तरैरित्यर्थः॥ २०॥

अतिचुक्रोशेत्यादि लङ्कायाया अपि मनुष्यभावनार्थम्॥ २१॥

तामकामां * स कामार्त्तः पन्नगेन्द्रवधूमिव ।
विचेष्टमानामादाय उत्पपाताथ रावणः ॥ २२ ॥
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥ २३ ॥
हा लक्ष्मण ! महाबाहो ! गुरुचित्तप्रसादक ! ।
ह्रियमाणां न जानीषे रक्षसा कामरूपिणा ॥ २४ ॥
जीवितं सुखमर्थञ्च धर्महेतोः परित्यजन् ।
ह्रियमाणामधर्मेण मां राघव ! न पश्यसि ॥ २५ ॥
ननु नामाविनीतानां विनेतासि परन्तप ! ।
कथमेवंविधं पापं न त्वं शाधि हि रावणम् ॥ २६ ॥
न तु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ।

अकामां विरागिणीं विचेष्टमानां तत आत्मानं मोचयितुम् ॥ २२ ॥

मत्तेव अतिदुःखवशादुन्मत्तेव तथा भ्रान्तचित्ता आतुरा शोकातुरा यथा क्रोशति तथा चुक्रोश । अत्रेवयथाभ्यां सर्वचेष्टानां नाट्यत्वं सूचितम् ॥ २३ ॥ २४ ॥ २५ ॥

ननु नामेति प्रसिद्धौ विनेता शिक्षकः न शाधि प्राप्तकालं शासनं न करोषि हिर्वाक्यालङ्कारे शोकातुरत्वादाधिकपदं न दोषाय ॥ २६ ॥

स्वयमेव तत्र हेतुमुन्नयति,—नत्विति । अविनीतस्य पुरुषस्याविन-

* रामकामाम् इति वा पाठः ।

कालोप्यङ्गीभवत्यत्र सस्यानामिव पक्तये ॥ २७ ॥
त्वं कर्म कृतवानेतत् कालोपहतचेतनः।
जीवितान्तकरं घोरं रामाद्व्यसनमाप्नुहि ॥ २८ ॥
हन्तेदानीं सकामा तु कैकेयी बान्धवैः सह।
ह्रियेयं धर्मकामस्य धर्मपत्नी यशस्विनः ॥ २९ ॥
आमन्त्रये जनस्थानं कर्णिकारांश्च पुष्पितान्।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः * ॥ ३० ॥
हंससारससंघुष्टां वन्दे गोदावरीं नदीम्।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ३१ ॥
दैवतानि च यान्यस्मिन् वने विविधपादपे।
नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ॥ ३२ ॥

यद्धपकर्मणः फलं सद्यो न दृश्यते यतस्तत्र कालोऽप्यङ्गीभवति सह-कारिकारणं भवति पक्तिः पाकः ॥ २७ ॥

अधुना स्वेष्टं शापमाह,—त्वमिति। व्यसनं पुत्रपौत्रादिनाश-रूपम् ॥ २८ ॥

सकामातु जातेति शेषः। यत इत्यादिः ॥ २९ ॥

---

* माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम्।
क्षिप्रं रामाय शंसस्व सीतां हरति रावणः ॥
इत्यतिरिक्तं पाश्चात्याः।

यानि कानिचिदप्यत्र सत्वानि विविधानि च * ।
सर्वाणि शरणं यामि मृगपक्षिगणानि वै ॥ ३३ ॥
ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् ।
विवशा ते हृता सीता रावणेनेति शंसत ॥ ३४ ॥
विदित्वा तु महाबाहुरमुत्रापि महाबलः ।
आनेष्यति पराक्रम्य वैवस्वतहृतामपि ॥ ३५ ॥
सा तदा करुणा वाचो विलपन्ती सुदुःखिता ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ३६ ॥
सा तमुदीक्ष्य सुश्रोणी रावणस्य वशं गता ।
समाक्रन्दद्भयपरा दुःखोपहितया * गिरा ॥ ३७ ॥
जटायो ! पश्य मामार्य्य ! ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥ ३८ ॥

हरतीति शंसध्वमिति सम्बन्धः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥
ते सीतेत्यन्वयः ॥ ३४ ॥
अमुत्रापि परलोकेऽपि गतां वैवस्वतहृतामपि मां विदित्वा पराक्रम्य पराक्रमं कृत्वा आनेष्यत्येव अतो यूयं शंसतेत्यन्वयः ॥ ३५ ॥
गृध्रं जटायुषम् ॥ ३६ ॥ ३८ ॥

---

* निवसन्त्युत इति वा पाठः ।
* शब्दोपहतया इति वा पाठः ।

नैष वारयितुं शक्यस्त्वया क्रूरो निशाचरः।
सत्त्ववान् जितकाशी च सायुधश्चैव दुर्मतिः॥ ३९॥
रामाय तु यथातत्त्वं जटायो! हरणं मम।
लक्ष्मणाय च तत् सर्वमाख्यातव्यमशेषतः॥ ४०॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे सीता-
हरणं नाम एकोनपञ्चाशः सर्गः॥ ४९॥

तुभ्यमिति पाठे त्वयेत्यर्थे आर्षं तत् न शक्य इत्यत्र हेतुः सत्त्व-
वानित्यादि॥ ३९॥ ४०॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकोनपञ्चाशः सर्गः॥ ४९॥

---

# पञ्चाशः सर्गः ।

तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे ।
निरैक्षद्रावणं क्षिप्रं वैदेहीञ्च यशस्विनीम् ॥ १ ॥
ततः पर्वतशृङ्गाभस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥ २ ॥
दशग्रीव ! स्थितो धर्मे पुराणे सत्यसंश्रवः ।
भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि साम्प्रतम् ॥ ३ ॥
जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः ।
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ॥ ४ ॥
लोकानाञ्च हिते युक्तो रामो दशरथात्मजः ।

तं शब्दं जटायो पश्य मामिति शब्दं अवसुप्तः भोजनोत्तरं दिवैव गाढसुप्तोऽपि शुश्रुवे । ततस्तेन शब्देन प्रबुद्धो रावणं निरैक्षत ॥१॥२॥

दशग्रीवेति संबुद्धिः । अहं सत्यसंश्रवः सत्यप्रतिज्ञः सीतारक्षणे अहं सहाय इत्युक्तत्वादिति भावः । नाम्ना जटायुरिति प्रसिद्धोऽतो मत्समक्षमीदृशं कर्म कर्तुं नार्हसि । भ्रातरिति सामप्रयोगः । यद्येवं न त्यक्ष्यसि तदा सत्यप्रतिज्ञत्वात् मया सह युद्धं भावीति दण्डप्रयोगश्च व्यंग्यः ॥ ३ ॥

राजेति सर्वस्य लोकस्य राजत्वेन तवापि राजेति ध्वनितम् ॥ ४ ॥

तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी॥ ५॥
सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि।
कथं राजा स्थितो धर्मे परदारान् परामृशेत्॥ ६॥
रक्षणीया विशेषेण राजदारा महाबल!।
निवर्त्तय गतिं नीचां परदाराभिमर्शनात्॥ ७॥
न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत्।
यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शनात्॥ ८॥
अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम्।
न व्यवस्यन्ति राजानो धर्मं पौलस्त्यनन्दन!॥ ९॥
राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः।

धर्मपत्नीत्यनेनैतद्धरणे महापापं सूचितम्॥ ५॥

कथं राजेति। भवानिति शेषः। धर्मे प्रजापालनरूपे॥ ६॥

राजदारा इति तद्धरणस्य गुरुतल्पसमत्वादिति भावः॥ ७॥

अस्य पुरुषस्य परः स्वेतरः प्राणी यत् कर्म विगर्हयेत् न तत् समाचरेत् स्वदारवत् परदाराश्च विमर्शनात् परस्पर्शाद्रक्ष्याः॥ ८॥

शास्त्रेष्वनागतं शास्त्रेष्वनवगतं परमसूक्ष्मत्वाच्छास्त्रतोनवगतमपि अर्थं वा राजानमनुसृत्य व्यवस्यन्ति शास्त्रेऽस्फुटमपि राज्ञो आचरणं दृष्ट्वा प्रजा आचरन्ति तस्माद्राज्ञोऽधर्मप्रवृत्तिरनुचितेति तात्पर्य्यम्। न व्यवस्यन्ति राजान इति पाठे शास्त्रेष्वनागतं तत्राप्रतिपादितं धर्मं राजानो न व्यवस्यन्ति नेच्छन्तीत्यर्थः। तस्माच्छास्त्रानुसारिधर्मे एव मतिं कुर्य्यादित्याशयः॥ ९॥

धर्मः शुभं वा पापं वा राजमूलं प्रवर्त्तते ॥ १० ॥
पापस्वभावश्चपलः कथं त्वं रक्षसां वर !।
ऐश्वर्य्यमभिसंप्राप्तो विमानमिव दुष्कृती ॥ ११ ॥
कामस्वभावो यः सोऽसौ न शक्यस्तं प्रमार्जितुम्।
न हि दुष्टात्मनामार्य्यमावसत्यालये चिरम् ॥ १२ ॥
विषये वा पुरे वा ते यदा रामो महाबलः।
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १३ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः।
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १४ ॥

तथा राजा द्रव्याणामुत्तमवस्तूनामुत्तमो निधिः। तथा धर्मस्य कामस्येति पाठे प्रजानामिति राजेति च शेषः। द्रव्याणामिति प्राग्वदेव। यतो धनादिकं राजमूलम् अतो राजा प्रजानां धर्मादिरूप इत्यर्थः। शुभं कामम् ॥ १० ॥

एवंभूतराजधर्महीने त्वयि कथमैश्वर्य्यागम इत्याह,—पापेति। दुष्कृती स्वायोग्यं देवयानमिव ॥ ११ ॥

ननु ऐश्वर्य्येण पुण्यमपि मय्यनुमीयतां तत्राह,—कामेति। यः पुमान् कामस्वभावो भवति सोऽसौ तं स्वभावं प्रमार्जितुं न शक्यः। तन्मार्जनं हि धर्मेण पापमपनुदतीति श्रुतेः धर्मेण स्यान्न च स तस्मिन्नस्तीत्याह,—नहीति। यस्माद्दुष्टात्मनामालये आर्य्यं पूज्यं पुण्यं चिरं चिरकालेनापि नावसति ॥ १२ ॥

यदा रामः यस्माद्राम इत्यर्थः ॥ १३ ॥

अत्र ब्रूहि यथा तत्त्वं को रामस्य व्यतिक्रमः।
यस्य त्वं लोकनाथस्य हृत्वा भार्य्यां गमिष्यसि ॥ १५ ॥
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा।
दहेद्दहनकल्पेन वृत्रमिन्द्राशनिर्यथा ॥ १६ ॥
सर्पमाशीविषं बध्वा वस्त्रान्तेनावबुध्यसे।
ग्रीवायां प्रतिमुक्तञ्च कालपाशं न पश्यसि ॥ १७ ॥
स भारः सौम्य ! भर्त्तव्यो यो नरं नावसादयेत्।
तदन्नमपि भोक्तव्यं जीर्य्यते यदनामयम् ॥ १८ ॥
यत् कृत्वा न भवेद्धर्मो न कीर्त्तिर्न यशो ध्रुवम्।
शरीरस्य भवेत् खेदः कस्तत् कर्म समाचरेत् ॥ १९ ॥
षष्टिवर्षसहस्राणि जातस्य मम रावण !।

अनपराधेऽसिद्धः खरादिवधादित्याशंक्याह,—यदीति। अनपराधे हेतुः। पूर्वमतिवृत्तः अतिक्रान्तोचितवृत्तः ॥ १४ ॥

गमिष्यसीत्यत्र काकुः। न जीवन् गमिष्यसीत्यर्थः ॥ १५ ॥

त्वा त्वां घोरेण चक्षुषा मा दहेद्राम इति शेषः। इन्द्राशनिरिन्द्र-प्रयुक्तं वज्रम् ॥ १६ ॥ १७ ॥

भारः भारवद्द्रव्यम्। अनामयं रोगानुत्पादकम् ॥ १८ ॥

यत् कर्म कृत्वा धर्मः कीर्त्तिः पारलौकिकी पुण्यातिशयजा बला-द्यैश्वर्य्यातिशयजं यशस्तन्न भवेत् नोत्पद्येत्। पूर्वार्जितञ्च धर्मादि न भवेन्नश्येत् किञ्च येन शरीरस्य खेदः तत् कर्म कश्चिद्बुधः समाचरेन्न कोऽपीत्यर्थः ॥ १९ ॥

एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ।
भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५ ॥
न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः ।
प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६ ॥
आर्य्येणेव पराक्रुष्टं लक्ष्मणेति सुविस्वरम् * ।
परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७ ॥
सा तमार्त्तस्वरं श्रुत्वा तव स्नेहेन मैथिली ।
गच्छ गच्छेति मामाह रुदन्ती भयविक्लवा ॥ ८ ॥
प्रचोद्यमानेन मया गच्छेति बहुशस्तया ।
प्रत्युक्ता मैथिलीवाक्यमिदं तत्प्रत्ययान्वितम् ॥ ९ ॥

• यस्य सत्यत्वसम्भावनायां शरीरनिमित्तानि तत्कालानुभूयमाना-न्याह, स्फुरते इति । स्फुरति सव्यं वामं बाहुरपि वाम एव । हृदयञ्च वामभाग एव ॥ ४ ॥

पूर्वं सीतावचनाद्दुःखितः अकृत्यं कृतमिति रामवचनाद् भूयो दुःखितः ॥ ५ ॥

कामकारेण स्वेच्छया प्रचोदितः उग्रैर्दुःश्रवैर्वचोभिरिति शेषः ॥६॥

लक्ष्मणेति सुतरां विस्वरं परित्राहीति च आर्य्येणेव त्वयेव यत्परि-क्रुष्टं तन्मैथिल्याः श्रुतिं गतम् ॥ ७ ॥ ८ ॥

---

* हा सीते लक्ष्मणेति च इति वा पाठः ।

न तत् पश्याम्यहं रक्षो यदस्य भयमावहेत्।
निवृत्ता भव नास्त्येतत् केनाप्येतदुदाहृतम्॥ १०॥
विगर्हितञ्च नीचञ्च कथमार्य्योऽभिधास्यति।
त्राहीति वचनं सीते! यस्त्रायेत्त्रिदशानपि॥ ११॥
किं निमित्तन्तु केनापि भ्रातुरालम्ब्य मे स्वरम्।
विस्वरं व्याहृतं वाक्यं लक्ष्मण! त्राहि मामिति॥ १२॥
राक्षसेनेरितं वाक्यं त्रासात्त्राहीति शोभने!।
न भवत्या व्यथा कार्य्या कुनारीजनसेविता॥ १३॥
अलं विक्लवतां गन्तुं * स्वस्था भव निरुत्सुका।
न चास्ति त्रिषु लोकेषु पुमान् यो राघवं रणे॥ १४॥

तत्प्रत्ययान्वितं तस्या अपि प्रत्ययेन विश्वसनीयत्वेनान्वितं लक्ष्मेन योग्यमिदं वक्ष्यमाणं वाक्यं प्रत्युक्ता प्रतिवचनत्वेनोक्ता॥ ९॥

किं तत्तत्राह, नेति। एतत् कातरवचनं नास्य रामस्य केनापि रक्षसाऽन्येन वोदाहृतम्॥ १०॥

तद्वचनत्वाभावे हेतुः विगर्हितमिति। क्षत्रियस्य निन्दितमतएव नीचं कुत्सितम्। यो देवानपि त्रायेत् देवत्राणेऽपि यः समर्थः स कथमीदृग् वाक्यं ब्रूयात्॥ ११॥

किन्निमित्तं कुत्सितं किञ्चिन्निमित्तमाश्रित्य केनापि रक्षसेरितं॥ १२॥ १३॥

---

* अलं विक्लवमानंत्व इति वा पाठः।

जातो वा जायमानो वा संयुगे यः पराजयेत् ।
अजेयो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५ ॥
एवमुक्त्वा तु वैदेही परिमोहितचेतना ।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६ ॥
भावो मयि तवात्यर्थं पाप एव निवेशितः ।
विनष्टे भ्रातरि प्राप्तुं * न च त्वं मामवाप्स्यसे ॥ १७ ॥
सङ्केतात् भरतेन त्वं रामं समनुगच्छसि ।
क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ॥ १८ ॥
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि ।
राघवस्यान्तरं प्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥
एवमुक्तस्तु वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात् प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥ २० ॥

विक्लवतां गन्तुमलं वैक्लव्यमाशंसितुं मार्हसीत्यर्थः । पुमान् विद्यमान इति शेषः । यः पराजयेदित्यपकर्षः ॥ १४ ॥

जायमान इत्यनेन जनिष्यमाण इत्यर्थकेन भाविनोऽपि वारणम् अतः संयुगे इत्यस्य न पौनरुक्त्यम् ॥ १५ ॥ १६ ॥

भावो मयीत्यादिव्याख्यातप्रायं विनष्टे भ्रातरि मां प्राप्तुम् अत्यर्थप्रापकरूप एव भावस्तव हृदि मद्विषये निवेशितो दैवेनेति शेषः । नच मामवाप्स्यसे तन्नाशे ममापि नाशात् ॥ १७ ॥

---

* विनाशं भ्रातरि प्राप्ते इति वा पाठः ।

एवं ब्रुवाणं सौमित्रिं रामः सन्तापमोहितः।
अब्रवीद्‌दुष्कृतं सौम्य! तां विना त्वमिहागतः॥ २१॥
जानन्नपि समर्थं मां रक्षसामपवारणे।
अनेन क्रोधवाक्येन मैथिल्या निर्गतो भवान्॥ २२॥
न हि ते परितुष्यामि त्यक्त्वा यदसि मैथिलीम्।
क्रुद्धायाः परुषं श्रुत्वा स्त्रिया यत्त्वमिहागतः॥ २३॥
सर्वथा त्वपनीतं ते सीतया यत् प्रचोदितः।
क्रोधस्य वशमागम्य नाकरोः शासनं मम॥ २४॥
असौ हि राक्षसः शेते शरेणाभिहतो मया।
मृगरूपेण येनाहमाश्रमादपवाहितः॥ २५॥

संकेतात् पापरूपं संकेतं कृत्वेत्यर्थः। नाभिपद्यसे नाभ्यवपद्यसे क्रोशन्तं क्रोशतस्तस्य त्राणाय न गच्छसि॥ १८॥ १९॥ २०॥

दुष्कृतमकृत्यं कृतमिति शेषः॥ २१॥

त्वद्रक्षार्थमिति चेत्तत्राह,—जानन्नपीति। अनेन मैथिल्याः क्रोधवाक्येन किं भवानाश्रमान्निर्गतः॥ २२॥

यन्मैथिलीं त्यक्त्वा इहागतोऽसि तेन ते न परितुष्यामि। यच्च क्रुद्धाया स्त्रियाः परुषं श्रुत्वा त्वमिहागतोऽसि तेन ते न तुष्यामि। क्रुद्धस्त्रीणां वाक्ये मर्य्यादालेशस्याप्यभावादिति भावः॥ २३॥

अपनीतमपनयोऽनीति रिति यावत् कृतेति शेषः। यत्तया प्रचोदितः सन् क्रोधवशं प्राप्य मम शासनं नाकरोः॥ २४॥

विक्रष्य चापं परिधाय सायकं
सलीलबाणेन च ताड़ितो मया ।
मार्गीं तनुं त्यज्य च विक्लवस्वरो
बभूव केयूरधरः स राक्षसः ॥ २६ ॥
शराहतेनैव तदार्तया गिरा
स्वरं ममालंब्य सुदूरसुश्रवम् ।
उदाहृतं तद्वचनं सुदारुणं
त्वमागतो येन विहाय मैथिलीम् ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे राम-लक्ष्मणसंवादो नाम एकोनषष्टितमः सर्गः ॥ ५९ ॥

अधुना स्ववृत्तान्तमाह, असाविति । बुद्धिस्थित्यैवं निर्देशः । अप-वाहितः दूरमाकृष्टः ॥ २५ ॥

परिधाय सन्धाय सलीलबाणेन नातिविक्रष्य मुक्तेन मार्गीं मृग-सम्बन्धिनीम् ॥ २६ ॥

सुदूरेऽपि संश्रवः संश्रवणं यस्य तं स्वरं मम मत्स्वरसदृशं आलंब्य तद्वचनमुपाह्वनम् उक्तम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ।

भृशमाव्रजमानस्य तस्याधो वामलोचनम् ।
प्रास्फुरच्चास्खलद्रामो वेपथुश्चास्य जायते ॥ १ ॥
उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ।
अपि क्षेमं तु सीताया इति वै व्याजहार ह * ॥ २ ॥
त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३ ॥
उद्भ्रमन्निव वेगेन विक्षिपन् रघुनन्दनः ।
तत्र तत्रोटजस्थानमभिवीक्ष्य समन्ततः ॥ ४ ॥
ददर्श पर्णशालाञ्च सीतया रहितां तदा ।
श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ॥ ५ ॥

आव्रजमानस्य आश्रममागच्छतः अधःप्रास्फुरत् स्वयमस्खलद्वेपथुः कम्पश्चास्याजायत ॥ १ ॥

अपि क्षेममिति तु व्याजहारेत्यन्वयः ॥ २ ॥ ३ ॥

उद्भ्रमन्नितस्ततो व्रजन् विक्षिपन् हस्तादीन् क्षिपन् । तत्र तत्र सीता भविष्यतीत्याशयाऽभिवीक्ष्य ॥ ४ ॥ ५ ॥

---

* व्याजहार पुनः पुनः इति वा पाठः ।

रुदन्तमिव वृक्षैश्च म्लानपुष्पमृगद्विजम् ।
श्रिया विहीनं विध्वस्तं संत्यक्तं वनदैवतैः ॥ ६ ॥
विप्रकीर्णाजिनकुशं विप्रविद्धबृसीकटम् ।
दृष्ट्वा शून्योटजस्थानं विललाप पुनः पुनः ॥ ७ ॥
हृता मृता वा नष्टा वा भक्षिता वा भविष्यति ।
निलीनाप्यथवा भीरुरथवा वनमाश्रिता ॥ ८ ॥
गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः ।
अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९ ॥
यत्नान् मृगयमाणस्तु नाससाद वने प्रियाम् ।
शोकरक्तेक्षणः श्रीमानुन्मत्त इव लक्ष्यते ॥ १० ॥

रुदन्तमित्यादेराश्रमो विशेष्यः । वर्णनीयमयीभावेन कवेरपि सन्निहितवैपरीत्यम् ॥ ६ ॥ ७ ॥

नष्टा अदर्शनं गता स्वयोगशक्त्या पुनरनभ्यदर्शना जातेति तात्पर्यम् ॥ ८ ॥ ९ ॥

नदीं गतेत्यादिसन्तर्क्य तत्र तत्र यत्नात् मृगयमाणोऽपि नाससाद उन्मत्त इवेत्ययमिवशब्दो मृगयमाणः प्रधावन् बभ्रामेत्यादौ सर्वत्र सम्बन्ध्यः । एतत् सर्वं लोकव्यवहारनटनं भगवतश्चित्स्वरूपस्य लोके सर्वतो भार्य्या प्रियतमेति बोधयितुम् । अतएव मातापितृवियोगेनेतावच्छोककारणं । तदुक्तं भागवते च मनुजोजभवार्चिताङ्घ्रिरसंख्यवीर्य्य इत्यादिना विशिष्टं राममुपक्रम्य ।———

वृक्षाद् वृक्षं प्रधावन् स गिरींश्चापि नदीनदम्।
बभ्राम विलपन् रामः * शोकपङ्कार्णवप्लुतः ॥ ११ ॥
अस्ति कच्चित्त्वया दृष्टा सा कदम्बवनप्रिया।
कदम्ब ! यदि जानीषे शंस सीतां शुभाननाम् ॥ १२ ॥

रक्षोधमेन वृकवद्विपिनेऽसमक्षं
वैदेहराजदुहितर्यपयापितायाम्।
भ्रान्ता वने कृपणवत् प्रियया वियुक्तः
स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥ इति।
नेदं यशो रघुपतेः सुरयाच्ञयात्त-
लीलातनोरधिकसाम्यविमुक्तधाम्नः।
रक्षोवधो जलधिबन्धनमस्त्रपूगै-
र्यत्तस्य शत्रुहनने कपयः सहायाः ॥

इति च यद्यथा सुग्रीवाद्याश्रयणवदिदमपि लीलैवेति न तत्तस्य स्तुति-रिति तदर्थः। लीलाप्रयोजनञ्च तच्छ्रवणेन लोकोद्धारः। एतन्नवमे एकादशाध्यायस्थे पद्ये। तथा पञ्चमेऽपि।

मर्त्यावतारस्त्विह मर्त्यशिक्षणं
रक्षोवधायैव न केवलं विभोः।
कुतोऽन्यथा स्याद् रमतः स्व आत्मन्
सीताकृतानि व्यसनानीश्वरस्य ॥

इति ॥ १० ॥

---

* विपिने दीनः इति वा पाठः।

स्निग्धपल्लवसंकाशां पीतकौशेयवासिनीम्।
शंसस्व यदि सा दृष्टा बिल्व! बिल्वोपमस्तनी ॥ १३ ॥
अथवार्जुन! शंस त्वं प्रियां तामर्जुनप्रियाम्।
जनकस्य सुता तन्वी यदि जीवति वा न वा ॥ १४ ॥
ककुभः ककुभोरूं तां व्यक्तं जानाति मैथिलीम्।
लतापल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥ १५ ॥
भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्यसि।
एष व्यक्तं विजानाति तिलकस्तिलकप्रियाम् ॥ १६ ॥

नदीनदं नदीसम्बन्धिनदं जातावेकवचनम्। नारा इति लोकप्रसिद्धम्। नदाः पश्चिमप्रवाहा इति कतकः। पश्चिमप्रवाहाया अपि नर्मदाया नदत्वव्यवहाराभावाच्चिन्त्यं तत् ॥ ११ ॥

उन्मत्त इवेत्युक्तं विवृणोति। अस्ति कश्चिदिति प्रश्ने कदम्बप्रियत्वात् सर्वथा त्वया दृष्टेत्यर्थः। यदीति वेदा यदि प्रमाणमिति वत् ॥१२॥

स्निग्धपल्लवसङ्काशां तद्वत् कोमलाङ्गीम् ॥ १३ ॥

अर्जुनः करवीरः। करवीरः करालश्च करवीरो तथार्जुन इति निघंटुः ॥ १४ ॥

ककुभो मरुबकः ककुभस्य बहिस्त्वचोऽपि सूक्ष्मत्वात् तद्वत् सूक्ष्मोरूं तस्य ज्ञातृत्वोपपादकं लतेत्यादि। तत्सम्बन्धं विना कथमियत्शो सम्पदस्येति भावः ॥ १५ ॥

उप समीपे गीतः क्रियमाणझङ्कार इत्यर्थः। तथा द्रुमवरो ह्यसि

अशोक! शोकापनुद! शोकोपहतचेतनम्।
त्वन्नामानं कुरु क्षिप्रं प्रियासन्दर्शनेन माम्॥ १७॥
यदि ताल! त्वया दृष्टा पक्वतालोपमस्तनी।
कथयस्व वरारोहां कारुण्यं यदि ते मयि॥ १८॥
यदि दृष्टा त्वया जम्बो! जाम्बूनदसमप्रभा।
प्रियां यदि विजानासि निःशंकं कथयस्व मे॥ १९॥
अहो त्वं कर्णिकाराद्य पुष्पितः शोभसे भृशम्।
कर्णिकारप्रियां साध्वीं शंस दृष्टा यदि प्रिया॥ २०॥
चूतनीपमहाशालान् पनसान् कुररांस्तथा।
दाड़िमानपि तान् गत्वा दृष्ट्वा रामो महायशाः॥ २१॥
बकुलानथ पुन्नागान् चन्दनान् * केतकांस्तथा।
पृच्छन् रामो वने भ्रान्त उन्मत्त इव लक्ष्यते॥ २२॥

इति स्तौति तत उत्तरमलब्ध्वान्य प्रत्याह, एष इति। तत्प्रियत्वात् तत्स्नेयत्वसम्भावना॥ १६॥

त्वन्नामानम् अशोकं कुर्वित्यर्थः। शोकापनुदत्वादेतत् करणयोग्यता॥ १७॥ १८॥

निःशङ्कं मरणादिकथनेऽपि शङ्का न कार्य्येति भावः॥ १९॥ २०॥

रामः पप्रच्छेति शेषः॥ २१॥

---

* चम्पकान् इति वा पाठः।

अथवा मृगशावाक्षीं मृग ! जानासि मैथिलीम् ।
मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥ २३ ॥
गज ! सा गजनासोरूर्यदि दृष्टा त्वया भवेत् ।
तां मन्ये विदितां तुभ्यमाख्याहि वरवारण ! ॥ २४ ॥
शार्दूल ! यदि सा दृष्टा प्रिया चन्द्रनिभानना ।
मैथिली मम विस्रब्धः कथयस्व न ते भयम् ॥ २५ ॥
किं धावसि प्रिये ! नूनं दृष्टासि कमलेक्षणे ! ।
वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ॥ २६ ॥
तिष्ठ तिष्ठ वरारोहे ! न तेऽस्ति करुणा मयि ।

उन्मत्त इव मानुषव्यवहारनटनवशात् वस्तुतो नोन्मत्त इत्यर्थः ।
उन्मादस्यापि विरहे औचित्याद्दशावस्थासु गणितत्वाच्च ॥ २२ ॥

मृगीभिः सहिता भवेदित्यादौ सम्भावनायां लिङ् । सम्भावनाबीजं मृगविप्रेक्षणीत्वम् ॥ २३ ॥

गजस्य वेत्तृत्वसम्भावनाबीजं गजनासोरुत्वं यदोच्चत्वात् दूरदर्शित्वम् ॥ २४ ॥

न ते भयं त्वया भक्षिता चेदपि तया कथनेऽपि तव मत्तो न भयमित्यर्थः ॥ २५ ॥

अतिविरहवशात् सर्वतस्तद्भ्रमावस्थां नाटयति, किमिति ॥ २६ ॥

नात्यर्थं हास्यशीलासि नात्यन्तं परिहासशीलासि । किमथमिति इतः परमदर्शने मतिर्मे प्रसक्तेति भावः ॥ २७ ॥

नात्यर्थं हास्यशीलासि किमर्थं मामुपेक्षसे । २७ ।
पीतकौशेयकेनासि सूचिता वरवर्णिनि ! ।
धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ २८ ॥
नैव सा नूनमथवा हिंसिता चारुहासिनी ।
कृच्छ्रं प्राप्तं हि मां नूनं यथापेक्षितुमर्हति । २९ ॥
व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः ।
विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३० ॥
नूनं तच्छुभदन्तोष्ठं सुनासं शुभकुण्डलम् ।
पूर्णचन्द्रनिभं ग्रस्तं मुखं निष्प्रभतां गतम् । ३१ ॥
सा हि चन्दनवर्णाभा ग्रीवा ग्रैवेयकोचिता * ।
कोमला विलपन्त्यास्तु कान्ताया भक्षिता शुभा । ३२ ॥

पीतवस्त्रेण सूचितासि । धावन्ती दृष्टासि च तस्मात्तिष्ठ ।। २८ ।।

पुनर्बाधावस्था । नूनं सा नैव या दृष्टा । तर्हि सा केयमित्याह । अथवा हिंसिता रक्षोभिस्तत्र हेतुः यथा एवं प्रकारेण कृच्छ्रं नूनं मां प्राप्तं सापेक्षितुमर्हति नापेक्षते तस्मान्नैव सेत्यर्थः । उपेक्षितुमिति पाठे काकुः ।। २९ ।।

उक्तमेव स्पष्टयति व्यक्तमिति ।। ३० ।।

निष्प्रभतां गतं रक्षोभिर्ग्रासादिति शेषः ।। ३१ ।।

---

* शोभिता इति वा पाठः ।

नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ ।
भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ २३ ॥
मया विरहिता बाला रक्षसां भक्षणाय वै ।
सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ २४ ॥
हा लक्ष्मण ! महाबाहो ! पश्यसि त्वं प्रियां क्वचित् ।
हा प्रिये ! क्व गता भद्रे ! हा सीतेति पुनः पुनः ॥ २५ ॥
इत्येवं विलपन् रामः परिधावद्वनाद्वनम् ।
क्वचिदुद्भ्रमते वेगात् क्वचिद्विभ्रमते बलात् ॥ २६ ॥
क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ।
स वनानि नदीः शैलान् गिरिप्रस्रवणानि च ।
काननानि च वेगेन भ्रमत्यपरिसंस्थितः ॥ २७ ॥

तदा स गत्वा विपुलं महद्वनं
परीत्य सर्वं त्वथ मैथिलीं प्रति ।

सर्वत्रोत्प्रेक्षा ग्रैवेयं ग्रीवाभूषणम् ॥ २२ ॥

विक्षिप्यमाणौ इतस्ततः क्षिप्यमाणौ ॥ २३ ॥

रक्षसां भक्षणाय सा बाला मया स्वविरहिता कृता बहुबान्धवापि या सार्थेन परित्यक्ता हीना स्त्री सेव भक्षिता रक्षोभिरिति शेषः ॥२४॥

पश्यसे पश्यसि हा सी.तेति इकारलोप आर्षः ॥ २५ ॥

परिधावन् उद्भ्रमते उत्पतति विभ्रमते वात्यावत् ॥ २६ ॥

अपरिसंस्थितः । क्वचिदपि स्थितिमलभमानो भ्रमति ॥ २७ ॥

अनिष्ठिताशः स चकार मार्गणे
पुनः प्रियायाः परमं परिश्रमम् ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रामविरह-
वर्णनं नाम षष्टितमः सर्गः ॥ ६० ॥

अनिष्ठिताशः अनिवृत्ताशः मार्गणे अन्वेषणे पुनः परमं परिश्रमं चकार। अर्धो वा एष आत्मन इति श्रुतेः तस्याः प्रियात्वम्। एतत् सर्वं लोकव्यवहारनटनमित्युक्तमेव न त्वेतावता भगवति तमोरजसोः संभावनेति दिक् ॥३८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

# एकषष्टितमः सर्गः ।

दृष्ट्वाश्रमपदं शून्यं रामो दशरथात्मजः ।
रहितां पर्णशालाञ्च प्रविद्धान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं सन्निरीक्ष्य च सर्वशः ।
उवाच रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ २ ॥
क्व नु लक्ष्मण ! वैदेही कं वा देशमितो गता ।
केनाहृता वा सौमित्रे ! भक्षिता केन वा प्रिया ॥ ३ ॥
वृक्षेणावार्य्य यदि मां सीते ! हसितुमिच्छसि ।
अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४ ॥
यैः परिक्रीड़से सीते ! विश्वस्तैर्मृगपोतकैः ।
एते हीनास्त्वया सौम्ये ! ध्यायन्त्यस्राविलेक्षणाः ॥ ५ ॥
सीतया रहितोऽहं वै न हि जीवामि लक्ष्मण ! ।

प्रविद्धानि इतस्ततः प्रक्षिप्तानि ॥ १ ॥
प्राक्रुश्य हा इति शब्दं कृत्वा बाहू प्रगृह्य उत्क्षिप्य ॥ २ ॥
तदेव वचनं क्वेति ॥ ३ ॥
वृक्षेणेत्यादि पुनःप्रलापः आवार्य्य आच्छाद्य ॥ ४ ॥

मृतं शोकेन महता सीताहरणजेन माम् ॥ ६ ॥
परलोके महाराजो नूनं द्रक्ष्यति मे पिता।
कथं प्रतिज्ञां संश्रुत्य मया त्वमभियोजितः ॥ ७ ॥
अपूरयित्वा तं कालं मत्सकाशमिहागतः।
कामवृत्तमनार्य्यं मां मृषावादिनमेव च ॥ ८ ॥
धिक्त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता।
विवशं शोकसन्तप्तं दीनं भग्नमनोरथम् ॥ ९ ॥
मामिहोत्सृज्य करुणं कीर्त्तिर्नरमिवानृजुम्।
क्व गच्छसि वरारोहे! मामोत्सृज सुमध्यमे! ॥ १० ॥
त्वया विरहितश्चाहं त्यक्ष्ये जीवितमात्मनः।
इतीव विलपन् रामः सीतादर्शनलालसः ॥ ११ ॥
न ददर्श सुदुःखार्त्तो राघवो जनकात्मजाम्।

विश्वस्तैश्चिरकालसहवासेन विश्वासं प्राप्तैः ध्यायन्ति त्वामिति शेषः ॥ ५ ॥ ६ ॥

मरणेऽपि परलोके मम धिक्कार एव प्राप्नोतीत्याह, कथमिति। संश्रुत्य प्रतिज्ञाय अभियोजितः नियुक्तः ॥ ७ ॥ ८ ॥

पुनः सीतामुद्दिश्य प्रलपति, विवशमिति ॥ ९ ॥

अनृजुं कुटिलशीलं मामुत्सृज्य क्व गच्छसि। इत्येवाह, मां मा उत्सृज त्यज ॥ १० ॥ ११ ॥

अनासादयमानं तं सीतां शोकपरायणम् ॥ १२ ॥
पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् ।
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ॥ १३ ॥
मा विषादं महाबुद्धे ! कुरु यत्नं मया सह ।
इदं गिरिवरं * वीर ! बहुकन्दरशोभितम् ॥ १४ ॥
प्रियकाननसञ्चारा वनोन्मत्ता च मैथिली ।
सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥ १५ ॥
सरितं वापि संप्राप्ता मीनवञ्जुलसेविताम् ।
वित्रासयितुकामा वा लीना स्यात् कानने क्वचित् ॥१६॥
जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ! ।
तस्या ह्यन्वेषणे श्रीमन् ! क्षिप्रमेव यतावहे ॥ १७ ॥

सीतामनासादयमानमप्राप्नुवानं रामं लक्ष्मण उवाचेत्यन्वयः ॥ १२ ॥ १३ ॥

विषादं मा कुर्विति शेषः । कुरु यत्नमन्वेषणे इति शेषः ॥ १४ ॥

प्रियः काननसञ्चारो यस्याः सा वनोन्मत्ता वनस्य पुष्पितत्वदर्शनादुन्मत्ता हर्षवती ॥ १५ ॥

वञ्जुलो वेतसः सम्भावनायां लिङ् । सर्वत्र वित्रासयितुकामा अस्मान् ॥ १६ ॥

---

* इदमस्य हि वनं इति वा पाठः ।

वनं सर्वं विचिनुवो यत्र सा जनकात्मजा।
मन्यसे यदि काकुत्स्थ ! मास्म शोके मनः कृथाः ॥ १८ ॥
एवमुक्तः स सौहार्दाल्लक्ष्मणेन समाहितः।
सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ १९ ॥
तौ वनानि गिरिंश्चैव सरितश्च सरांसि च।
निखिलेन विचिन्वन्तौ सीतां दशरथात्मजौ ॥ २० ॥
तस्य शैलस्य सानूनि शिलाश्च * शिखराणि च।
निखिलेन विचिन्वन्तौ नैव तामभिजग्मतुः ॥ २१ ॥
विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत्।
नेह पश्यामि सौमित्रे ! वैदेहीं पर्वते शुभाम् ॥ २२ ॥
ततो दुःखाभिसन्तप्तो लक्ष्मणो वाक्यमब्रवीत्।
विचरन् दण्डकारण्यं भ्रातरं दीप्ततेजसम् ॥ २३ ॥

जिज्ञासमाना आवयोरन्वेषणसामर्थ्यम्। यतावहे यत्नं कुर्वः ॥ १७ ॥
यत्र सा अस्तीति शेषः ॥ १८ ॥
विचेतुमन्वेष्टुम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥
नेह पश्यामि वैदेहीमित्युक्तेऽपि पुनर्विलापपरिहाराय लक्ष्मणोऽवदर्दित्याह, तत इति ॥ २३ ॥

---

* गुहाश्च इति वा पाठः।

प्राप्स्यसे त्वं महाप्राज्ञ ! मैथिलीं जनकात्मजाम् ।
यथा विष्णुर्महाबाहुर्बलिं बध्वा महीमिमाम् ॥ २४ ॥
एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
उवाच दीनया वाचा दुःखाभिहतचेतनः ॥ २५ ॥
वनं सुविचितं सर्वं पद्मिन्यः फुल्लपङ्कजाः ।
गिरिश्चायं महाप्राज्ञ ! बहुकन्दरनिर्झरः ।
न हि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ॥ २६ ॥
एवं स विलपन् रामः सीताहरणकर्षितः ।
दीनः शोकसमाविष्टो मुहूर्त्तं विक्लवोऽभवत् ॥ २७ ॥
स विक्लवितसर्वाङ्गो गतबुद्धिर्विचेतनः ।
विषसादातुरो दीनो निःश्वस्याशीतमायतम् ॥ २८ ॥
बहुशः स तु निश्वस्य रामो राजीवलोचनः ।
हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥ २९ ॥

दण्डकारण्यं विचरन् त्वं सीतां प्राप्स्यसि । तत्र दृष्टान्तो यथा विष्णुरिति ॥ २४ ॥ २५ ॥

अस्तु लक्ष्मणैवं कृतं करणेन किमित्याह रामः । वनमिति ॥ २६ ॥

विक्लवः परवशः ॥ २७ ॥

गतबुद्धिर्ज्ञानशून्य इव विचेतनश्चेष्टारहित इव । अशीतम् उष्णं आयतं दीर्घम् ॥ २८ ॥

हा प्रिये इतीति इकारलोप आर्षः ॥ २९ ॥

तं सांत्वयामास ततो लक्ष्मणः प्रियबान्धवः ।
बहुप्रकारं शोकार्तः प्रश्रितः प्रश्रिताञ्जलिः ॥ ३० ॥
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठपुटच्युतम् ।
अपश्यंस्तां प्रियां सीतां प्राक्रोशत् स पुनः पुनः ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे राम-
लक्ष्मणसंवादो नाम एकषष्टितमः सर्गः ॥ ६१ ॥

प्रश्रितो विनयोपेतः प्रश्रिताञ्जलिः बद्धाञ्जलिः ॥ ३० ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

सीतामपश्यन् धर्मात्मा शोकोपहतचेतनः ।
विललाप महाबाहू रामः कमललोचनः ॥ १ ॥
पश्यन्निव च तां सीतामपश्यन् मन्मथार्दितः ।
उवाच राघवो वाक्यं विलापाश्रयदुर्वचम् ॥ २ ॥
त्वमशोकस्य शाखाभिः पुष्पप्रियतया प्रिये ! ।
आवृणोषि शरीरन्ते मम शोकविवर्द्धनी ॥ ३ ॥
कदलीकाण्डसदृशौ कदल्या संवृतावुभौ ।
ऊरू पश्यामि ते देवि ! नासि शक्ता निगूहितुम् ॥ ४ ॥
कर्णिकारवनं भद्रे ! हसन्ती देवि ! सेवसे ।

एवं प्रियावियोगदुःसह इति बोधयन् पुनः शोचति । सीतामिति शोकोपहतचेतनः शोकेन सीतावियोगजेनोपहतज्ञान इव ॥ १ ॥

अपश्यन्नपि भ्रमावस्थत्वात् पश्यन्निव विलापाश्रयत्वेन दुर्वचं गद्गदकण्ठत्वात् ॥ २ ॥

ते स्वस्य सीतायाः ॥ ३ ॥

कदलीस्कन्धेति पाठेऽपि स्कन्धः काण्डं निगूहितुं शक्ता नासि आत्मानमिति शेषः ॥ ४ ॥

अलं ते परिहासेन ममबाधावहेन वै ॥ ५ ॥
विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।
अवगच्छामि ते शीलं परिहासप्रियं प्रिये ! ॥ ६ ॥
आगच्छ त्वं विशालाक्षि ! शून्योऽयमुटजस्तव ।
सुव्यक्तं राक्षसैः सीता भक्षिता वा हृतापि वा ॥ ७ ॥
न हि सा विलपन्तं मामुपसंप्रैति लक्ष्मण ! ।
एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण ! ॥ ८ ॥
शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः ।
हा ममार्य्ये ! क्व यातासि हा साध्वि ! वरवर्णिनि ! ॥ ९ ॥
हा सकामाद्य कैकेयी देवि ! मेऽद्य भविष्यति ।
सीतया सह निर्यातो विना सीतामुपागतः ॥ १० ॥
कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं पुनः ।
निर्वीर्य्य इति लोको मां निर्दयश्चेति वक्ष्यति ॥ ११ ॥
कातरत्वं प्रकाशं हि सीतापनयनेन मे ।

ततो वनान्तरं गच्छतीति भ्रमन्नाह, कर्णिकारेति ॥ ५ ॥ ६ ॥
पुनर्भ्रमनिवृत्त्याह, सुव्यक्तमिति ॥ ७ ॥
उपसंप्रैति हासरसेनोपेक्षत इत्यर्थः । भक्षितां शंसन्तीव तत्र बीजं साश्रुनेत्राणीति ॥ ८ ॥ ९ ॥
विना सीतामुपागत इति सकामा भविष्यति त्वया भक्षितयेति शेषः ॥ १० ॥ ११ ॥

निवृत्तवनवासस्य जनकं मिथिलाधिपम् ॥ १२ ॥
कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।
विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ॥ १३ ॥
सुताविनाशसन्तप्तो * मोहस्य वशमेष्यति ।
तात ! एव कृतार्थः स तत्रैव वसतादिति ॥ १४ ॥
अथवा न गमिष्यामि पुरीं भरतपालिताम् ।
स्वर्गोऽपि हि तया हीनः शून्य एवमतो मम ॥ १५ ॥
तन्मामुत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् ।
न त्वहं तां विना सीतां जीवेयं हि कथञ्चन ॥ १६ ॥
गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ।
अनुज्ञातोऽसि रामेण पालयेति वसुन्धराम् ॥ १७ ॥
अम्बा च मम कैकेयी सुमित्रा च त्वया विभो ! ।
कौशल्या च यथान्यायमभिवाद्या ममाज्ञया ॥ १८ ॥

कातरत्वमशूरत्वं सीतापनयनेन सीतानाशेन ॥ १२ ॥

तया सीतया विरहितं हीनम् ॥ १३ ॥

तात एव कृतार्थः स तत्रैव वसतादिति अर्धमधिकम् । कतकपाठे तातो दशरथ एव कृतार्थः । वसतादिति लोट् व्यत्ययेन । यतस्तत्रैव स्वर्गे एव वसति न तु जीवन्ती कौशल्येत्यर्थः ॥ १४ ॥

---

* दुहितृस्नेहसन्तप्तः इति वा पाठः ।

रक्षणीया प्रयत्नेन भवता सूक्तचारिणा * ।
सीतायाश्च विनाशोऽयं मम चामित्रसूदन ! ।
विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ १९ ॥

इति विलपति राघवे तु दीने
वनमुपगम्य तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि
व्यथितमना भृशमातुरो बभूव ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे रामविलापनं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

पश्चान्तरमादत्ते अथवेति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥
भयविकलमुखः भयेन विवर्णमुखः ॥ २० ॥

---

* युक्तकारिणा इति वा पाठः ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ।

स राजपुत्रः प्रियया विहीनः
शोकेन * मोहेन च पीड्यमानः ।
विषादयन् भ्रातरमार्त्तरूपो
भूयो विषादं प्रविवेश तीव्रम् ॥ १ ॥

स लक्ष्मणं शोकवशाभिपन्नं
शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूप-
मुष्णं विनिःश्वस्य रुदन् सशोकम् ॥ २ ॥

न मद्विधो दुष्कृतकर्मकारी
मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।

शोक इष्टवियोगजवृत्तिविशेषः । तज्जन्यं चित्तवैक्लव्यं मोहः ॥ १ ॥

शोकवशेनाभिपन्नं पीडितं विपुलेति राम इति पाठेऽतिशयिते शोके इत्यर्थः । व्यसनानुरूपं लोकस्य दुःखप्रसङ्गे उचितम् ॥ १ ॥

शोकमनुप्रवृत्तः शोकः शोकानुशोकः सः परम्परायास्तृतीयार्थे

---

* कामेन इति वा पाठः ।

शोकानुशोको हि परंपराया
मामेति भिन्दन् हृदयं मनश्च ॥ ३ ॥
पूर्वं मया नूनमभीप्सितानि
पापानि कर्माण्यसकृत् कृतानि।
तत्रायमद्यापतितो विपाको
दुःखेन दुःखं यदहं विशामि ॥ ४ ॥
राज्यप्रणाशः स्वजनैर्वियोगः
पितुर्विनाशो जननीवियोगः।
सर्वाणि मे लक्ष्मण ! शोकवेग-
मापूरयन्ति प्रविचिन्तितानि ॥ ५ ॥
सर्वन्तु दुःखं मम लक्ष्मणेदं
शान्तं शरीरे वनमेत्य शून्यम्।

षष्ठी। परम्परयाविच्छेदेन हि यतो मां हृदयं तदधिष्ठानमात्मानं मनश्च भिन्दन्नेति प्राप्नोति ॥ ३ ॥

उक्तमेव विस्तरेणाह,—पूर्वमिति। अभीप्सितानि चिकीर्षाविषयत्वं प्राप्तानि तत्र तेषां मध्ये केषाञ्चित् विपाकः फलपरिपाकोऽद्यमद्यापतितः प्राप्तः दुःखेन दुःखं दुःखपरम्परामित्यर्थः ॥ ४ ॥

तामेवाह, राज्येति। एतानि प्रविचिन्तितानि शोकवेगमिदानीन्तनमापूरयन्ति ॥ ५ ॥

सीतावियोगात् पुनरभ्युदीर्णं
काष्ठैरिवाग्निः सहसोपदीप्तः ॥ ६ ॥
सा नूनमार्य्या मम राक्षसेन
ह्यभ्याहृता * खं समुपेत्य भीरुः।
अप्यस्वरं सुस्वरविप्रलापा
भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७ ॥
तौ लोहितस्य प्रियदर्शनस्य
सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ
नूनं प्रियाया मम नाभिपातः ॥ ८ ॥
तत्श्लक्ष्णसुव्यक्तमृदुप्रलापं
तस्या मुखं कुञ्चितकेशभारम्।

वनमेत्य प्राप्य शरीरे क्लेशमनुभूयापि सीतासन्निधानात् सब शान्तम् अद्य सीतावियोगात् पुनरुदीर्णं वृद्धिं प्राप्तं प्रियावियोग एव दुःसह इति भावः ॥ ६ ॥

सा राक्षसेन नूनमभ्याहृता। तदा खमाकाशं समुपेत्य प्राप्य अस्वरं विक्रन्दितवती अपि सम्भाव्यत एवमित्यन्वयः ॥ ७ ॥

लोहितस्य चन्दनस्य हरिचन्दनस्य। लोहितं हरिचन्दनमिति

* बाला हृता इति वा पाठः।

रक्षोवधं नूनमुपागताया
न भ्राजते राहुमुखे यथेन्दुः। ९॥
तां हारपाशस्य सदोचितान्ताम्
ग्रीवां प्रियाया मम सुव्रतायाः।
रक्षांसि नूनं परिपीतवन्ती*
शून्ये हि भित्वा रुधिराशनानि॥ १०॥
मया विहीना विजने वने सा
रक्षोभिराहृत्य विकृष्यमाणा।
नूनं विनादं कुररीव दीना
सा मुक्तवत्यायतकान्तनेत्रा॥ ११॥
अस्मिन् मया सार्धमुदारशीला
शिलातले पूर्वमुपोपविष्टा।

कोशात्। शोणितपङ्कदिग्धा भक्षणाय राक्षसैर्विशसनादिति भावः। मम नाभिपातः। शरीरस्याभिपातो न जायत इत्यर्थः॥ ८॥ ९॥

हारपाशो हाररूपा माला तस्या उचितान्ताम् उचितोऽन्तः प्रान्तभागो यस्यास्तां तां कम्बुतुल्यां ग्रीवामित्यर्थः। परिपीतवन्तीति पाठे रुधिरमिति शेषः। भविष्यन्ति जातानीति वा शून्ये विजने।१० ११॥

उपोपविष्टा समीपावस्थिता निःशब्दं स्मितं ईषत् सशब्दो हासः॥ १२॥

---

* परिपीडयन्ति इति वा पाठः।

कान्तस्मिता लक्ष्मण ! जातहासा
त्वामाह सीता बहुवाक्यजातम् ॥ १२ ॥
गोदावरीयं सरितां वरिष्ठा
प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि
नैकाकिनी याति हि सा कदाचित् ॥ १३ ॥
पद्मानना पद्मपलाशनेत्रा
पद्मानिवानेतुमभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचित्
मया विना गच्छति पङ्कजानि ॥ १४ ॥
कामं त्विदं पुष्पितवृक्षखण्डं
नानाविधैः पक्षिगणैरुपेतम् ।
वनं प्रयाता नु तदप्ययुक्तं
एकाकिनी सातिबिभेति भीरुः ॥ १५ ॥
आदित्य ! भो ! लोककृताकृतज्ञ !
लोकस्य सत्यानृतकर्मसाक्षिन् ।

मम प्रियाया नित्यकालं प्रियेत्यन्वयः । अत्र गोदावर्यामियं चिन्ता नोत्पद्यत इत्याह, नैकाकिनीति ॥ १३ ॥

एवमग्रेऽपि गच्छति पङ्कजानि आनेतुमिति शेषः ॥ १४ ॥

मम प्रिया सा क्व गता हृता वा
शंसस्व मे शोकहतस्य सर्वम् ॥ १६ ॥
लोकेषु सर्वेषु न चास्ति किञ्चित्
यत्ते न नित्यं विदितं भवेत्तत् ।
शंसस्व वायो ! कुलपालिनीं तां
मृता हृता वा पथि वर्त्तते वा ॥ १७ ॥
इतीव तं शोकविधेयदेहं
रामं विसंज्ञं विलपन्तमेव ।
उवाच सौमित्रिरदीनसत्त्वो
न्याय्ये स्थितः कालयुतञ्च वाक्यम् ॥ १८ ॥
शोकं विसृज्याद्य धृतिं भजस्व
सोत्साहता चास्तु विमार्गणे स्याः ।
उत्साहवन्तो हि नरा न लोके
सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९ ॥

अतिविभेति अत्यन्तं भीता भवति ॥ १५ ॥

लोकक्षताक्षतस्येत्यादिना तादृशसूक्ष्मज्ञानवतस्तज्ज्ञानं सर्वथास्तीति भावः ॥ १६ ॥

यत्ते नित्यं विदितं न भवेत्तद्वस्तु सर्वेषु लोकेषु नैवास्ति अतः सापि तव विदितैवेति तां शंसस्वेत्यन्वयः। कुलपालिनीमित्यनेन तस्या महत्त्वात् तज्ज्ञानं मम नेति वक्तुमशक्यमिति सूचितम् ॥ १७ ॥

इतीव सौमित्रिमुदग्रपौरुषं
ब्रुवन्तमार्त्तं रघुवंशसत्तमः ।
न चिन्तयामास धृतिं विमुक्तवान्
पुनश्च दुःखं महदप्युपागमत् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे राम-
लक्ष्मणसंवादो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

इतीवातीवशब्दौ पर्य्यायौ । शोकविधेयदेहं तमिव । कालयुतं कालोचितम् ॥ १८ ॥ १९ ॥

न चिन्तयामास लक्ष्मणोक्तं युक्तमिति न विचारयामास । किन्तु धैर्य्यं त्यक्तवानेवातएव पुनर्दुःखं प्रापत् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६४ ॥

## चतुःषष्टितमः सर्गः ।

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ।
शीघ्रं लक्ष्मण ! जानीहि गत्वा गोदावरीं नदीम् ॥ १ ॥
अपि गोदावरीं सीता पद्मान्यानयितुं गता ।
एवमुक्तस्तु रामेण लक्ष्मणः पुनरेव हि ॥ २ ॥

एवं शोकाकारणं चारद्वारा श्रवणेन रावणस्य मनुष्यत्वबुद्धिदार्ढ्य-पूर्वकं स्ववध्यत्वसम्पादनायेति बोध्यम् । तदुक्तं ब्रह्माण्डपुराणे—

स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते ।
किन्तुनिर्दोषचैतन्यं सुखनित्यां स्वकां तनुम् ॥
प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।
तथाप्यसुरमोहार्थं परेषाञ्च क्वचित् क्वचित् ॥
दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ।
क्व श्रमादि क्वचाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे ॥
मोक्षाभावाय तेषान्तु दर्शयत्तानजो हरिः ।
लक्ष्म्याश्चत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् ॥
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ॥

इति । एतेन रावणस्येश्वरत्वबुद्धिप्रतिबन्धेन मोक्षाभावोऽपि शोकफल-मित्युक्तम् । एवं रावणद्वारा सीताहरणमपि तत्पुण्यातिशयनाशेन

नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ।
तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३ ॥
नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ।
कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी ॥ ४ ॥
न हि तं वेद्मि वै राम ! यत्र सा तनुमध्यमा ।
लक्ष्मणस्य वचः श्रुत्वा दीनः सन्तापमोहितः ॥ ५ ॥
रामः समभिचक्राम स्वयं गोदावरीं नदीम् ।
स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ६ ॥
भूतानि राक्षसेन्द्रेण वधार्हेण हृतामपि ।

वध्यतासम्पादनाय । तथा च केदारखण्डे उक्ताख्यायिका—महता तपसा लब्धबलो रावणस्तदधिकतपोबलं विना जेतुमशक्यो देवाश्च स्वयं तदधिकं तपःकर्तुमक्षमा अतस्तेषां कार्य्यमत्यन्तानुचितसीतानुरागमोहानुवृत्तिसंपादनेन रावणस्य तपोवीर्य्यभंगं संपाद्य कर्त्तव्यमिति ब्रह्मणा सह विचार्य्य तदर्थं विष्णुः सीतया ब्रह्मविद्यया सहावतीर्ण इति ॥ १ ॥ २ ॥

लघुविक्रमः अविलम्बितपादन्यासः तीर्थवतीम् अवतारवतीं पुण्योदकवतीञ्च ॥ ३ ॥

न शृणोति मे वाक्यमिति शेषः । क्लेशनाशिनी सति दर्शन इति भावः ॥ ४ ॥

तं देशम् ॥ ५ ॥

तां गोदावरीम् ॥ ६ ॥

न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७ ॥
ततः प्रचोदिता भूतैः शंस चास्मै प्रियामिति ।
नच सा ह्यवदत् सीतां पृष्टा रामेण शोचता ॥ ८ ॥
रावणस्य च तद्रूपं कर्मापि च दुरात्मनः ।
ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ह ॥ ९ ॥
निराशस्तु तया नद्या सीताया दर्शने कृतः ।
उवाच रामः सौमित्रिं सीतादर्शनकर्शितः ॥ १० ॥
एषा गोदावरी सौम्य ! किञ्चिन्न प्रतिभाषते ।
किन्नु लक्ष्मण ! वक्ष्यामि समेत्य जनकं वचः ॥ ११ ॥
मातरञ्चैव वैदेह्या विना तामहमप्रियम् ।
या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२ ॥
सर्वं व्यपनयच्छोकं वैदेही क्व नु सा गता ।

भूतानि उत्कृष्टेण एच्छ्यमानानि राक्षसेन्द्रेण हृतां ज्ञात्वापि रक्षोभयाद्रामाय न शशंसुः । तथा गोदावरी च न शशंसेत्यर्थः ॥७॥

तथाभूतैरस्मै सीतां शंसेति प्रचोदितापि गोदावरी पृष्टापि नावदत् ॥ ८ ॥

तत्र हेतुः रावणस्येति ॥ ९ ॥

नद्या सीतामशंसन्त्या रामः सीतादर्शने निराशः कृतः इयं गोदावरी दिव्यदेवता न ब्रूते अतस्तद्दर्शनं दुर्लभमिति निराशोऽभूत् ॥ १० ॥

तदेवाह, एषेति ॥ ११ ॥ १२ ॥ १३ ॥

ज्ञातिवर्गविहीनस्य वैदेहीमप्यपश्यतः ॥ १३ ॥
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ।
मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् ॥ १४ ॥
सर्वाण्यनुचरिष्यामि * यदि सीता हि लभ्यते ।
एते महामृगा वीर ! मामीक्षन्ते पुनः पुनः ॥ १५ ॥
वक्तुकामा इव हि मे इङ्गितान्युपलक्षये ।
तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ १६ ॥
क्व सीतेति निरीक्षन् वै बाष्पसंरुद्धया गिरा † ।
एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ १७ ॥
दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् ।

मन्दाकिनी काचिन्नदी प्रस्रवणस्तदाख्यो गिरिः ॥ १४ ॥

सर्वाण्यनुचरिष्यामि अनुचरवत् सेविष्यामि ॥ १५ ॥

एषामिङ्गितानि तथोपलक्षये यथा वक्तुकामा इवेमेत्यर्थः ॥ १६ ॥

निरीक्षन् मृगचेष्टाज्ञानाय सूक्ष्मदृष्टिं कुर्वन् । एवमुक्ताः एवं पृष्टाः ॥ १७ ॥

नभःस्थलं दर्शयन्तः उन्मुखतयाकाशावलोकनेङ्गितेनेत्यर्थः । क्रियमाणा सीता यां दिशमभ्यपद्यत ॥ १८ ॥

* संहृष्टो विचरिष्यामि इति वा पाठः ।

† हृष्णा इति वा पाठः ।

मैथिली ह्रियमाणा सा दिशं यामभ्यपद्यत ॥ १८ ॥
तेन मार्गेण गच्छन्तो निरीक्षन्ते नराधिपम् ।
येन मार्गञ्च भूमिञ्च निरीक्षन्ते स्म ते मृगाः ॥ १९ ॥
पुनर्नदन्तो गच्छन्ति * लक्ष्मणेनोपलक्षिताः ।
तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २० ॥
उवाच लक्ष्मणो धीमान् ज्येष्ठं भ्रातरमार्त्तवत् ।
क्व सीतेति त्वया पृष्टा यदि मे सहसोत्थिताः ॥ २१ ॥
दर्शयन्ति क्षितिञ्चैव दक्षिणाञ्च दिशं मृगाः ।
साधु गच्छावहे देव ! दिशमेताञ्च नैरृतीम् ॥ २२ ॥
यदि तस्यागमः कश्चिदार्य्या वा साथ लक्ष्यते ।
बाढ़मित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ २३ ॥

तेन मार्गेण दिङ्मार्गेण गच्छन्तो धावन्तो नराधिपं रामं निरीक्षन्ते । एवमिङ्गितं लक्ष्मणोऽपश्यदित्याह, येनेति । येन हेतुना मार्गमाकाशमार्गं पुनर्भूमौ गमनाय भूमिञ्च निरीक्षन्ते ॥ १९ ॥

पुनश्च मार्गं दर्शयितुमिच्छन्तो लक्ष्मणेनोपलक्षितास्तेषामिङ्गितं लक्ष्मणो लक्षयामासेत्यर्थः । आकाशमार्गेण गत्वा दक्षिणदिशि दूरे स्थापिता सीता दक्षिणदिशि गच्छतेत्येवं तदिङ्गितम् । तेषाञ्च वचनसर्वस्वभूतं स्वयं लक्षयामास ततो ज्ञात्वा भ्रातरमप्युवाचेत्यर्थः । आर्त्तवत् आर्त्तार्हम् ॥ २० ॥ २१ ॥ २२ ॥

---

* पुनश्च मार्गमिच्छन्तः इति वा पाठः ।

लक्ष्मणानुगतः श्रीमान् वीक्षमाणो वसुन्धराम् ।
एवं सम्भाषमाणौ तौ अन्योऽन्यं भ्रातरावुभौ ॥ २४ ॥
वसुन्धरायां पतितपुष्पमार्गमपश्यताम् ।
पुष्पवृष्टिं निपतितां दृष्ट्वा रामो महीतले ॥ २५ ॥
उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः ।
अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ! ॥ २६ ॥
अपिनद्धानि वैदेह्या मया दत्तानि कानने ।
मन्ये सूर्य्यश्च वायुश्च मेदिनी च यशस्विनी ॥ २७ ॥
अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् ।
एवमुक्त्वा महाबाहुर्लक्ष्मणं पुरुषर्षभम् ॥ २८ ॥
उवाच रामो धर्मात्मा गिरिं प्रस्रवणाकुलम् * ।
कच्चित् क्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ॥ २९ ॥

तस्यागमः तस्या आगम इत्यर्थः । आर्षो दीर्घः । ज्ञापकं वस्तु दृष्टस्तेत्यर्थः ॥ २३ ॥ २४ ॥

पतितपुष्पमार्गं पतितपुष्पयुतं मार्गम् ॥ २५ ॥

अभिजानामि प्रत्यभिजानामि ॥ २६ ॥

अपिनद्धानि केशपाशे बद्धानि । अम्लानत्वेन रविः । अपनयनेन वायुः । धारणेन वसुन्धरा । मत्प्रियं सीताज्ञापनरूपं प्रकुर्वन्तो रक्षन्तीति मन्ये ॥ २७ ॥ २८ ॥

---

* प्रस्रवणाभिधम् इति वा पाठः ।

रामा रम्ये वनोद्देशे मया विरहिता त्वया।
क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा॥ ३०॥
तां हेमवर्णां हेमाङ्गीं सीतां दर्शय पर्वत!।
यावत् सानूनि सर्वाणि न ते विध्वंसयाम्यहम्॥ ३१॥
एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति।
दर्शयन्निव तां सीतां * नादर्शयत राघवे॥ ३२॥
ततो दाशरथी राम उवाच च शिलोच्चयम्।
मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि॥ ३३॥
असेव्यः सर्वतश्चैव निस्तृणद्रुमपल्लवः।
इमां वा सरितञ्चाद्य शोषयिष्यामि लक्ष्मण!॥ ३४॥
यदि नाख्याति मे सीतामद्यचन्द्रनिभाननाम्।
एवं प्ररुषितो रामो दिधक्षन्निव चक्षुषा॥ ३५॥

मया विरहिता कश्चिद्रम्ये वनोद्देशे सर्वाङ्गसुन्दरी दृष्टा॥ २९॥
क्रुद्धस्तदधिष्ठातृदेवतोद्देशेन क्रोधः॥ ३०॥
हेमाङ्गीमित्यनेन लावण्यमुक्तम्॥ ३१॥
दर्शयन्निव वक्ष्यमाणलिङ्गद्वारा नादर्शयद्वा ग्राहित्येन साक्षादिति शेषः। राघवे तद्विषये॥ ३२॥ ३३॥ ३४॥
दिधक्षन्निव नतु वास्तवीदिधक्षेति भावः॥ ३५॥

* शंसन्निव ततः सीताम् इति वा पाठः।

ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् ।
त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६ ॥
राक्षसेनानुसृप्ताया वैदेह्याश्च पदानि तु ।
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ ३७ ॥
भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ।
संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३८ ॥
पश्य लक्ष्मण ! वैदेह्या कीर्णाः कनकबिन्दवः ।
भूषणानां हि सौमित्रे ! माल्यानि विविधानि च ॥ ३९ ॥
तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य सौमित्रे ! सर्वतो धरणीतलम् ॥ ४० ॥
मन्ये लक्ष्मण ! वैदेही राक्षसैः कामरूपिभिः ।
भित्वा भित्वा विभक्ता वा * भक्षिता वा भविष्यति ॥ ४१ ॥

निष्क्रान्तं प्रवृत्तविक्षेपं महदत्यायतविस्तृतम् ॥ ३६ ॥

अनुसृप्ताया अनुगम्यमानायाः जटायुयुद्धसमये सीतां रावणेन भूमौ विसृज्य पुनर्ग्रहणादेवमुक्तिः । परिक्रान्तं परिवृतं एतत् सर्वं समीक्ष्य भ्रातरं शशंसेत्यन्वयः ॥ ३७ ॥ ३८ ॥

कनकबिन्दवः भूषणावयवीभूतस्वर्णशकलानि ॥ ३९ ॥

---

* विभक्ताङ्ग' इति वा पाठः ।

तस्या निमित्तं सीताया द्वयोर्विवदमानयोः।
बभूव युद्धं सौमित्रे! घोरं राक्षसयोरिह॥ ४२॥
मुक्तामणिचितं चेदं रमणीयं विभूषितम्।
धरण्यां पतितं सौम्य! कस्य भग्नं महद्धनुः॥ ४३॥
राक्षसानामिदं वत्स! सुराणामथवापि वा।
तरुणादित्यसंकाशं वैदूर्य्यगुलिकाचितम्॥ ४४॥
विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम्।
छत्रं शतशलाकञ्च दिव्यमाल्योपशोभितम्॥ ४५॥
भग्नदण्डमिदं सौम्य! भूमौ कस्य निपातितम्।
काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः॥ ४६॥
भीमरूपा महाकायाः कस्य वा निहता रणे।
दीप्तपावकसंकाशो द्युतिमान् समरध्वजः॥ ४७॥

भूषणानामिति पूर्वान्वयि। तप्तबिन्दुनिकाशैस्तपनीयबिन्दुसदृशैः क्षतजबिन्दुभिः रुधिरबिन्दुभिः॥ ४०॥

मन्ये इति। इमे रुधिरबिन्दवः सीतानिमित्तं सुन्दोपसुन्दवद्युद्ध्यमानयो रक्षसोर्वेति विकल्पालङ्कारः श्लोकद्वयेनोक्तः॥ ४१॥ ४२॥ ॥ ४३॥

वैदूर्य्यगुलिकाचितं वैदूर्य्यमण्यलंकृतम्॥ ४४॥ ४५॥

काञ्चनोरश्छदाः काञ्चनमयतनुत्राणाः॥ ४६॥

समरे स्वामिप्रकाशकोध्वजो यत्र स समरध्वज इति रथविशेषणं

अपविद्धस्य भग्नस्य कस्य सांग्रामिको रथः ।
रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ॥ ४८ ॥
कस्येमे निहता बाणाः प्रकीर्णा घोरदर्शनाः ।
शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ! ॥ ४९ ॥
प्रतोदाभीषुहस्तोऽयं कस्य वा सारथिर्हतः ।
पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ ५० ॥
वैरं शतगुणं पश्य मम तैर्जीवितान्तकम् ।
सुघोरहृदयैः सौम्य ! राक्षसैः कामरूपिभिः ॥ ५१ ॥
हृता मृता वा वैदेही भक्षिता वा तपस्विनी ।
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५२ ॥
भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण ! ।

तादृशो रथः अपविद्धः परित्यज्य पातितो भग्नस्तेत्युत्तरेणान्वयः । केचित्तु ध्वजोऽपविद्धः ध्वस्तः रथो भग्न इत्यन्वयमाहुः ॥ ४७ ॥

रथाक्षमात्राः चतुःशताङ्गुलदीर्घाः विशिखाः फलभागा इत्यर्थः ॥४८

निहताः परेण योधेन । शरावरौ तूणीरौ ॥ ५० ॥

प्रतोदः तोत्त्रं अभीषवः प्रग्रहाः ॥ ५० ॥

कस्यापि राक्षसपुरुषस्यैषा पदवी पदसञ्चारमार्गः । अतो मम तैः राक्षसैः सह एतन्निमित्तजं वैरं पूर्ववैराच्छतगुणं सत् तेषां जीवितान्तकं जीवितस्यान्तकं अन्तरूपं सम्पन्नं पश्य ॥ ५१ ॥

एवं रक्षोभिः सीताविपत्तिं निश्चित्य धर्मं निन्दति नेति । यतः

के हि लोके प्रियं कर्त्तुं शक्ताः सौम्य ! ममेश्वराः ॥ ५३ ॥
कर्त्तारमपि लोकानां शूरं करुणवेदिनम्।
अज्ञानादवमन्येरन् सर्वभूतानि लक्ष्मण ! ॥ ५४ ॥
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम्।
निर्वीर्य्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५५ ॥
मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण ! ।
अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५६ ॥

सीतां धर्मो न त्रायते। एवञ्च भक्षितायां हृतायां वा वैदेह्यां के हि लोके मम प्रियं कर्तुं शक्ताः न केऽपि धर्मासाध्ये तेषामकिञ्चित्करत्वा-दिति भावः ॥ ५२ ॥ ५३ ॥

अथ पौरुषमेवावलम्बितुं तच्छेषतया काञ्चिल्लोकस्थितिमाह, कर्त्तार-मिति। सर्वलोकस्योत्पत्तिस्थितिसंहारकर्त्तारमपि श्रुत्यादिप्रसिद्धशूरं त्रिपुरसंहारादिविषयकात्यन्तशौर्य्यवन्तं महेश्वरमपि करुणवेदिनं करुणां यथा तथा वेदितुं शीलमस्य तं दयादृष्ट्या तूष्णींस्थितमज्ञानात् तद्वैभवा-ज्ञानादवमन्येरन् किमयं कुपितोऽपि करिष्यति इति न गणयन्ती-त्यर्थः ॥ ५४ ॥

यदेवमतो मृदुमिति। लोकहिते प्राणिसौख्यसम्पादने युक्तं युक्त-चित्तम्। अतएव मृदुस्वभावं दान्तं नानाप्रकारेण दुर्विषयप्रवृत्ति-रहितेन्द्रियवर्गं मां त्रिदशेश्वरा इन्द्रादयो निर्वीर्य्यं मन्यन्ते यतः सीता-त्राणं न कृतवान् इत्यर्थः ॥ ५५ ॥

संहृत्यैव शशिज्योत्स्नां महान् सूर्य्य इवोदितः ।
संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशते ॥ ५७ ॥
नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ! ॥ ५८ ॥
ममास्त्रबाणसम्पूर्णमाकाशं पश्य लक्ष्मण ! ।
असम्पातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ५९ ॥
सन्निरुद्धग्रहगणमावारितनिशाकरम् ।
विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६० ॥
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ।

, तस्मात् पौरुषमेवावलम्बनीयमित्याह, गुणोऽपि मार्दवादिर्मां प्राप्य दोषोऽनिष्टसाधनं वृत्त इति हेतोरेतं त्यक्त्वा पौरुषमवलम्बे । पश्य अद्य मम तेज एव प्रकाशते । सर्वभूतानामभवाय नाशाय शशिज्योत्स्नां संहृत्यैव प्रलयकालोदितो महासूर्य इव । शशिज्योत्स्नातुल्यान् मामकान् गुणान् संहृत्यैव रविवत्तेजो मदीयं प्रकाशते पश्येत्यन्वयः ।५६।५७।

तदेव प्रपञ्चयति, नैवेति ॥ ५८ ॥

पश्य । अचिरादेवेति शेषः । त्रैलोक्यचारिणामसंपातं बाणावरणात् क्रियाराहित्यं यथा भवति तथा करिष्यामि ॥ ५९ ॥

सन्निरुद्धप्रचारो ग्रहगणो यत्र तत्त्रैलोक्यं विप्रनष्टा अनलादिद्युतयो यत्र तच्च तत् संवृतं तमसा संवृतमित्यर्थः ॥ ६० ॥ ६१ ॥

ध्वस्तद्रुमलतागुल्मं विप्रनाशितसागरम् ॥ ६१ ॥
त्रैलोक्यन्तु करिष्यामि संयुक्तं कालकर्मणा ।
न तां कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ॥ ६२ ॥
अस्मिन् मुहूर्त्ते सौमित्रे ! मम द्रक्ष्यन्ति विक्रमम् ।
नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ! * ॥ ६३ ॥
समाकुलममर्य्यादं जगत्पश्याद्य लक्ष्मण ! ।
आकर्णपूर्णैरिषुभिर्जीवलोकदुरावरैः ॥ ६४ ॥
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ।
मम रोषप्रयुक्तानां विशिखानां बलं सुराः ॥ ६५ ॥
द्रक्ष्यन्त्यद्य विमुक्तानाममर्षाद्दूरगामिनाम् ।
नैव देवा न दैतेया न पिशाचा न राक्षसाः ॥ ६६ ॥

कालकर्मणा कालसाध्यं कर्म नाशस्तेन कालधर्मणेति पाठेऽपि तद्रूपेण कालधर्मणेत्यर्थः तत्पुरुषेऽनिजार्षः ॥ ६२ ॥ ६३ ।

अमर्य्यादं त्यक्तस्वस्वप्रकृत्यवस्थानं जीवलोकेन दुरावरैः दुर्निवारैः। दुरावरशब्दः खलन्तः ॥ ६४ ॥ ६५ ॥ ६६ ॥

---

* मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् ।
मर्दितं मम नाराचैर्ध्वस्तभ्रान्तमृगद्विजम् ॥

इत्यतिरिक्तं केचित् पठन्ति ।

भविष्यन्ति मम क्रोधात् त्रैलोक्येऽपि प्रणाशिते ।
देवदानवयक्षाणां लोका ये रक्षसामपि ॥ ६७ ॥
बहुधा निपतिष्यन्ति बाणौघैः शकलीकृताः ।
निर्मर्य्यादानिमान् लोकान् करिष्ये मम सायकैः ॥ ६८ ॥
हृतां मृतां वा सौमित्र ! न दास्यन्ति ममेश्वराः ।
यथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ॥ ६९ ॥
नाशयामि जगत् सर्वं त्रैलोक्यं सचराचरम् ।
यावद्दर्शनमस्या वै तापयामि च सायकैः ॥ ७० ॥
इत्युक्त्वा क्रोधताम्राक्षः स्फुरमानोष्ठसंपुटः ।
वल्कलाजिनमाबध्य जटाभारमबन्धयत् ॥ ७१ ॥
तस्य क्रुद्धस्य रामस्य तथाभूतस्य धीमतः ।
त्रिपुरं जघ्नुषः पूर्वं रुद्रस्येव बभौ तनुः ॥ ७२ ॥
लक्ष्मणादथ चादाय रामो निष्पीड्य कार्मुकम् ।
शरमादाय सन्दीप्तं घोरमाशीविषोपमम् ॥ ७३ ॥
सन्दधे धनुषि श्रीमान् रामः परपुरञ्जयः ।
युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७४ ॥

देवादयो न भविष्यन्ति । प्रत्येकं सर्वे नङ्क्ष्यन्तीत्यर्थः ॥६७॥६८॥
तथारूपां यथापूर्वस्वभावाम् । अत्र न दास्यन्तीति पौनरुक्त्यं क्रोधातिशयान्न दोषाय ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

यथा जरा यथा मृत्युर्यथा कालो यथाविधिः।
नित्यं न प्रतिहन्यन्ते सर्व्वभूतेषु लक्ष्मण!।
तथाहं क्रोधसंयुक्तो न निवार्य्योऽस्म्यसंशयम्॥ ७५॥
पुरेव चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम्।

निष्पीड्य दृढमुष्टिबन्धेन गृहीत्वा॥ ७३॥ ७४॥

यथा जरादयोऽनिवार्य्यास्तथाहमस्मात् कर्मणः केनापि वारयितुमशक्यः। विधिर्दैवम्। विधिर्विधाने दैवेऽपि इति कोशः॥ ७५॥

पुरेवेति अत्र पुरेत्यावर्त्तते पुरेव पूर्वरूपसदृशरूपवतीं पुरा न दिशन्ति न दास्यन्तीत्यर्थः। परिवर्त्तयामि नाशयामि नन्वेवंविधः क्रोधः कथमस्य किमर्थश्चेति चेच्छृणु। मनुष्यदेहधारणेन तद्व्यवहारनटनमेवैतत्। किञ्च इष्टशदुःखकाले अस्य क्रोधाभावे रावणो मनुष्यबुद्धिं कुर्य्यात्। तथाच तद्वधाशक्यः स्यादित्येतदर्थश्च सः। मृत्युं मरणधर्मेण योजयामि इत्यादिवचोऽपि रावणवचोवदेव आरोपितक्रोधमूलकत्वात् अतएव शरैर्विधमिष्यामीत्युक्तिः। लक्ष्मणस्तु तत्त्वज्ञोऽपि तद्वदेवातत्त्वज्ञ इव तन्मायामोहितो वा प्रलयकालिकरौद्रशक्त्यावेशं संभाव्यानुनयति स्म। किञ्चास्य क्रोधस्यारोपितत्वाभावे अद्य सीताया अलाभे सर्वं जगत् परिवर्त्तनं प्रतिज्ञाय कथं लक्ष्मणप्रार्थनयापि तामन्यथयेत् अन्यथा कैकेय्यग्रे कृतां वनवासप्रतिज्ञां कथं कौशल्यावचसा न त्यक्तवान् तस्मात् सा यथार्था इयं तु आरोपितेत्येव सारम्।

सदेवगन्धर्वमनुष्यपन्नगं
जगत् सशैलं परिवर्त्तयाम्यहम् ॥ ७६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे पौरुषप्रकटनं नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

अनेन व्यवहारेण क्रोधादिकाले कृताया अयुक्ताया अपि प्रतिज्ञाया अपालने अत्यन्तदोषाभाव इत्यपि सूचितम् ॥ ७६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ।

तप्यमानं तदा रामं सीताहरणकर्शितम् ।
लोकानामभवे युक्तं सांवर्त्तकमिवानलम् ॥ १ ॥

वीक्ष्यमाणं धनुः सज्जं निःश्वसन्तं पुनः पुनः ।
दग्धुकामं जगत् सर्वं युगान्ते च यथा हरम् ॥ २ ॥

अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं स लक्ष्मणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥

पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥

चन्द्रे लक्ष्मीः प्रभा सूर्य्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५ ॥

अभवे नाशे युक्तमुद्युक्तम् । सांवर्त्तकं प्रलयकालिकम् ॥ १ ॥

हरं कालाग्निरुद्रम् ॥ २ ॥

अदृष्टपूर्वं पूर्वमेवं कदाप्यदृष्टसंहारशक्त्यावेशं संक्रुद्धं रामं दृष्ट्वा राममब्रवीदिति रामपदद्वयसम्बन्धः । मुखपरिशोषो लोकविनाशभयेन ॥ ३ ॥

प्रकृतिं सर्वभूतहितत्वरूपाम् ॥ ४ ॥

एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि ।
ननु जानामि कस्यायं भग्नः सांग्रामिको रथः ॥ ६ ॥
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ।
खुर*नेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ७ ॥
देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज ! ।
एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर ! ॥ ८ ॥
न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ।
नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ॥ ९ ॥

एतच्च उक्तचतुष्टयस्य अनुत्तमं यशस्य त्वयि नियतमित्यर्थः ॥ ५ ॥

एकस्यापराध इति कथं ज्ञायते तत्राह,—नन्विति । ननु जानाम्येक एवापराद्ध इति कुतस्तत्राह । कस्यचिदेव न केषाञ्चिदित्यर्थः । सायुधपरिकरो भग्न इत्यन्वयः ॥ ६ ॥

स केन भग्नः केन हेतुनेत्येतत्तु न जानामीति शेषः । खुरनेमिक्षतत्वादिविशिष्टोऽयं देशो निर्वृत्तसंग्रामो दृश्यते इति शेषः । एवंभूतैर्हेतुभिरयं विमर्दः संग्राम एकस्य रथिकस्य केनचित् सह न तु रथिकयोरिति शेषः ॥ ७ ॥ ८ ॥

तदेवाह नहीति । वृत्तं भुवि कृतचिह्नम् । अत एकस्य कृते लोकनाशो न युक्तः ॥ ९ ॥

---

* रथ इति वा पाठः ।

युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः।
सदा त्वं सर्वभूतानां शरण्यः परमा गतिः॥ १० ॥
कोऽनु दारप्रणाशन्ते साधु मन्येत राघव!।
सरितः सागराः शैला देवगन्धर्वदानवाः॥ ११ ॥
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः।
येन राजन्! हृता सीता तमन्वेषितुमर्हसि॥ १२ ॥
मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः।
समुद्रं वा विचेष्यामः पर्वतांश्च वनानि च॥ १३ ॥
गुहाश्च विविधा घोराः पद्मिन्यो विविधास्तथा *।
देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः॥ १४ ॥
यावन्नाधिगमिष्यामस्तव भार्य्यापहारिणम्।

युक्तदण्डा यथापराधदण्डाः। मृदवोऽकठिनाः॥ १० ॥

किञ्च यदि त्वद्दारप्रणाशो लोककर्तृको लोकानुमतो वा स्याद् युक्तं तन्नाशनं नैवमस्तीत्याह, कोन्विति॥ ११ ॥

सरिदादयस्ते विप्रियं कर्तुं नालं न समर्थाः न स्पृहावन्तो वा दीक्षितस्य यजमानस्य साधवो ज्ञानसम्पन्ना ऋत्विगादयो यथा विप्रियं प्राणादि दातुं व्यंग्य' वा कर्म कर्तुमसमर्थास्तद्वत्॥ १२ ॥

मद्द्वितीयः अहं द्वितीयः सहायो यस्य सः समुद्रादिष्वाश्रमेषु विचयनार्थं परमर्षिभिः सहायैरित्युक्तम्॥ १३ ॥ १४ ॥

---

* नलिनीः पार्व्वतीस्तथा इति वा पाठः।

न चेत् साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ।
कोशलेन्द्र ! ततः पश्चात् प्राप्तकालं * करिष्यसि ॥ १५ ॥

शीलेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र ! ।
ततः समुत्सादय हेमपुंखै-
र्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
प्रबोधनं नाम पञ्चषष्टितमः सर्गः ॥ ६४ ॥

यदि अस्मद्विचयनेनाशक्यात्तत्प्राप्तिः स्यात् । ततः परं देवाः सर्वशा यदि ते पत्नीं पत्नीवार्त्तां न दास्यन्ति । ततः पश्चात् प्राप्तकालं चतुर्थोपायं दण्डं तेषु करिष्यसि ॥ १५ ॥

शीलं सुचरित्रं साम साधुवादः विनयः प्रश्रयः नयो नीतिः ॥ १६॥

---

* वाणमोचनम् इति वा पाठः ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

तं तथा शोकसन्तप्तं विलपन्तमनाथवत् ।
मोहेन महता युक्तं परिद्यूनमचेतसम् ॥ १ ॥

ततः सौमित्रिराश्वास्य मुहूर्त्तादिव लक्ष्मणः ।
रामं सम्बोधयामास चरणौ चाभिपीड़यन् ॥ २ ॥

महता तपसा चापि महता चापि कर्मणा ।
राज्ञा दशरथेनासील्लब्धोऽमृतमिवामरैः ॥ ३ ॥

तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः ।
राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४ ॥

यदि दुःखमिदं प्राप्तं काकुत्स्थ ! न सहिष्यसे ।
प्राकृतश्चाल्पसत्वश्च इतरः कः सहिष्यति ॥ ५ ॥

एवं क्रोधमुपशमय्य सहजप्रकृतिप्राप्तये बोधयति लक्ष्मणो रामम् । तमिति । परिद्यूनं क्षीणम् अचेतसम् असवर्णचित्तमिव ॥ १ ॥

मुहूर्त्तादिव मुहूर्त्तादेव ॥ २ ॥

बोधनप्रकारो महतेत्यादि । तपसा पुत्रकामनया कृतेन व्रतादिना कर्मणा ऋष्यशृङ्गानयनपूर्वकमहायागेन ॥ ३ ॥

भरतस्य मुखादिति शेषः । यथा यथावच्छ्रुतम् ॥ ४ ॥

आश्वसिहि नरश्रेष्ठ! प्राणिनः कस्य नापदः।
संस्पृशंत्यग्निवद्राजन्! चणेन व्यपयान्ति च * ॥ ६ ॥
लोकस्वभाव एवैष ययातिर्नहुषात्मजः।
गतः शक्रस्य सालोक्यमनयस्तं समस्पृशत् ॥ ७ ॥
महर्षिर्यो वसिष्ठस्तु यः पितुर्नः पुरोहितः।
अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८ ॥

इतरः क इति। यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इत्युक्तेः। मर्त्यावतारस्त्विह मर्त्यशिक्षणमिति भागवतोक्तरीत्या लोकशिक्षणार्थमपि त्वदवतारादिति भावः ॥ ५ ॥

आश्वसिहीति। नह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेः ॥ ६ ॥

तदेव विवृणोति। लोकेति। एष औपाधिकदुःखसम्बन्धो लोकस्य शरीरिणः स्वभाव एव तदेवाह, ययातिरिति। अनयोऽनयमूलं दुःखं तच्च स्वर्गाद् भ्रंशरूपं समस्पृशदित्यनेन अचिरस्थितिकस्पर्शमात्रार्थकेन पुनरविलम्बेनैव दौहित्रप्रयुक्तसुखोत्तरकालिकदुःखनिवृत्तिरप्यस्य सूचिता ॥ ७ ॥

यो महर्षिः यः पुनर्नः पितुः पुरोहितस्तस्य पुत्रशतं जज्ञे अह्ना एकाह्ना च पुनर्विश्वामित्रेण हतम्। पूर्वं सुखोत्तरकालिकदुःखानन्तरं

---

* दुःखितो हि भवान् लोकांस्तेजसा यदि धक्ष्यसे।
आर्त्ताः प्रजा नरव्याघ्र! क नु यास्यन्ति निर्वृतिम् ॥
इत्यतिरिक्तं केचित्पठन्ति।

याचेयं जगतो माता सर्वलोकनमस्कृता।
अस्याश्च चलनं भूमेर्दृश्यते कोसलेश्वर!॥ ९॥
यौ धर्मौ जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम्।
आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ॥ १०॥
सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ!।
न दैवस्य प्रमुञ्चन्ति सर्वभूतानि देहिनः॥ ११॥
शक्रादिष्वपि देवेषु वर्त्तमानौ नयानयौ।
श्रूयते नरशार्दूल! न त्वं व्यथितुमर्हसि॥ १२॥
मृतायामपि वैदेह्यां नष्टायामपि राघव!।
शोचितुं नार्हसे वीर! यथान्यः प्राकृतस्तथा॥ १३॥
त्वद्विधा नहि शोचन्ति सततं सर्वदर्शनाः।

सुखं व्यंग्यतयोक्तात्र सुखानन्तरं दुःखमुक्तं एवञ्च महतामप्यवश्यं जायमाने ईदृशे सुखे दुःखे च न हर्षशोकौ भवादृशस्योचिताविति भावः॥ ८॥

चलनं भूकम्पजं दुःखमित्यर्थः॥ ९॥

यौ धर्मौ परावरधर्मप्रवर्त्तकौ नेत्रौ जगतः संसारचक्रस्य कालपरिच्छेदद्वारा प्रवर्त्तकौ अतएव यत्र सर्वं प्रतिष्ठितं तौ च ग्रहणं राहुग्रासदुःखं प्राप्तौ॥ १०॥

दैवस्य कर्मणो वशं न प्रमुञ्चन्तीत्यर्थः। किं पुनर्वक्तव्यं देहिनः सर्वभूतानि देहवन्ति सर्वभूतानि न मुञ्चन्तीति पुंस्त्वमार्षम्॥ ११॥

नयानयौ तन्मूलसुखदुःखे॥ १२॥ १३॥

सुमहत्स्वपि कृच्छ्रेषु रामानिर्विसदर्शना: ॥ १४ ॥
तत्त्वतो हि नरश्रेष्ठ ! बुद्ध्या समनुचिन्तय।
बुद्ध्या युक्ता महात्मानो विजानन्ति शुभाशुभे ॥ १५ ॥
अदृष्टगुणदोषाणामधुवाणान्तु कर्मणाम्।
नान्तरेण क्रियां तेषां फलमिष्टञ्च वर्त्तते ॥ १६ ॥
मामेवं हि पुरा वीर ! त्वमेव बहुशोक्तवान्।
अनुशिष्याद्धि को नु त्वामपि साक्षाद् बृहस्पतिः ॥ १७ ॥

अनिर्विसदर्शना विषादरहितदर्शनाः विषादराहित्येन कृत्याकृत्यतत्त्वज्ञानवन्तः ॥ १४ ॥

तत्त्वतः समनुचिन्तय युक्तायुक्तं कृत्याकृत्यञ्चेति शेषः। शुभाशुभे कर्त्तव्याकर्त्तव्ये युक्तायुक्ते। बुद्धियुक्ताः जानन्ति तस्मात्त्वं बुद्ध्या विचिन्तयेति शेषः ॥ १५ ॥

एवं दुःखमूलं प्राचीनं कर्म बुध्वा दुःखं सोढव्यमेवेत्याह, अदृष्टेति। शास्त्रैकसमधिगम्यतया प्रत्यक्षेणादृष्टगुणदोषाणां धर्मत्वाधर्मत्वे गुणदोषौ। आपाततो धर्मवद्भासमानानामधर्मत्वादिपरीत्याच्च अध्रुवाणां फलनाश्यानाम्। अनेन फलावश्यम्भावः सूचितः। तादृशानां कर्मणां निष्पत्तिः क्रियां तत्तत्पुरुषव्यापारमन्तरेण न भवति स्वव्यापारेण कृतानां तेषामिष्टं फलं सुखञ्चादनिष्टञ्च फलं वर्त्तते प्रवर्त्तत एव ननु न प्रवर्त्तत इति अतः सोढव्यमेवेति भावः ॥ १६ ॥

इयञ्च बुद्धि त्वदुक्तैव मेऽतस्त्वेवोपदेशे किं सामर्थ्यमिति न वाच्यमित्याह, मामिति। अकारणे क्रोधवशमापन्नमिति शेषः। बहुशोक्त-

बुद्धिश्च ते महाप्राज्ञ! देवैरपि * दुरन्वया।
शोकेनाभिप्रसुप्तन्ते ज्ञानं सम्बोधयाम्यहम् ॥ १८ ॥
दिव्यञ्च मानुषञ्चैवमात्मनश्च पराक्रमम्।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९ ॥
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ!।
तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे प्रबोधनं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥

वानिति सन्धिरार्षः। अनुशिष्यात् शिक्षितुं शक्तः स्यात् बृहस्पतिरपि अन्यस्य का गणनेत्यर्थः ॥ १७ ॥

देवैरपि दुरन्वया अन्वेतुमनुगन्तुमशक्या त्वज्ज्ञानपरिच्छेदो देवानामप्यशक्य इति भावः। अनेनेश्वरता सूचिता तथापि शोकेनाभिहितमिव ते ज्ञानं सम्बोधयामि बोधयामीव ॥ १८ ॥

दिव्यं देवोचितं मानुषं मनुष्योचितम्। एवमुभयविधपराक्रमाश्रयत्वमात्मनोवेक्ष्य तत्राद्यः परशुरामविषयः। अन्त्यो रक्षोविषयः एतच्च देवोचितपराक्रमस्यायं नावसर इति भावः ॥ १९ ॥

कृतेन अनुष्ठितेन ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

* लोकैरेतैः इति वा पाठः।

## सप्तषष्टितमः सर्गः।

पूर्वजोऽप्युक्तवाक्यस्तु लक्ष्मणेन सुभाषितम्।
सारग्राही महासारं प्रतिजग्राह राघवः॥ १॥
स निगृह्य महाबाहुः प्रवृद्धं रोषमात्मनः।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत्॥ २॥
किं करिष्यावहे वत्स! क्व वा गच्छाव लक्ष्मण!।
केनोपायेन पश्यावः सीतामिह विचिन्तय॥ ३॥
तं तथा परितापार्त्तं लक्ष्मणो वाक्यमब्रवीत्।
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि॥ ४॥
राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम्।
सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च॥ ५॥
गुहाश्च विविधा घोरा नानामृगगणाकुलाः।
आवासाः किन्नराणाञ्च गन्धर्वभवनानि च॥ ६॥

पूर्वजोऽपि रामः लक्ष्मणेन सुभाषितं यथा भवति तथोक्तवाक्यस्तद्वाक्यस्य महासारं सयुक्तिकत्वात् सारांशम्॥ १॥ २॥ ३॥ ४॥

तानि युक्तो मया सार्द्धं समन्वेषितुमर्हसि।
त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभाः ॥ ७ ॥
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः।
इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः ॥ ८ ॥
क्रुद्धो रामः शरं घोरं सन्धाय धनुषि क्षुरम्।
ततः पर्वतकूटाभं महाकायं द्विजोत्तमम् ॥ ९ ॥
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम्।
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १० ॥
अनेन किल वैदेही भक्षिता नात्र संशयः।
गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति काननम् ॥ ११ ॥
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम्।
एनं वधिष्ये दीप्ताग्रैः शरैर्घोरैरजिह्मगैः ॥ १२ ॥
इत्युक्त्वाभ्यपतद् द्रष्टुं * सन्धाय धनुषि क्षुरम्।
क्रुद्धो रामः समुद्रांतां चालयन्निव मेदिनीम् ॥ १३ ॥

इह जनस्थाने गिरिगतानि दुर्गाणि गन्तुमशक्यदेशाः सन्तीत्यर्थः।
निर्दराः विदीर्णपाषाणाः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

क्षुरं तदग्निभितं शरमित्यर्थः। तं सन्धाय विचचारेत्यन्वयः ॥ ९ ॥
॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

---

* गृध्रम् इति वा पाठः।

तं दीनदीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी स रामं दशरथात्मजम् ॥ १४ ॥
यामौषधीमिवायुष्मन्! अन्वेषसि महावने ।
सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५ ॥
त्वया विरहिता देवी लक्ष्मणेन च राघव! ।
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥
सीतामभ्यवपन्नोऽहं रावणस्य रणे प्रभो *! ।
विध्वंसितरथच्छत्रः पतितो धरणीतले ॥ १७ ॥
एतदस्य धनुर्भग्नमेते चास्य शरास्तथा ।
अयमस्य रणे राम! भग्नः सांग्रामिको रथः ॥ १८ ॥
अयं तु सारथिस्तस्य मत्पक्षनिहतो भुवि ।
परिश्रान्तस्य मे पक्षौ छित्वा खड्गेन रावणः ॥ १९ ॥
सीतामादाय वैदेहीमुत्पपात विहायसम् ।
रक्षसा निहतं पूर्वं मां न हन्तुं त्वमर्हसि ॥ २० ॥

सफेनं फेनसहितं दीनदीनया अतिशयित दीनया दीनसदृशा वा ॥ १४ ॥
औषधीमिव संजीवनौषधीमिव अन्वेषसि अन्वेषसे ॥ १५ ॥ १६ ॥

* मया इति वा पाठः

रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम् ।
गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ॥ २१ ॥
निपपातावशो भूमौ रुरोद सहलक्ष्मणः ।
द्विगुणीकृततापार्त्तो रामो धीरतरोऽपि सन् ॥ २२ ॥
एकमेकायने कृच्छ्रे निश्वसन्तं मुहुर्मुहुः ।
समीक्ष्य दुःखितो रामः सौमित्रिमिदमब्रवीत् ॥ २३ ॥
राज्यं भ्रष्टं वने वासः सीता नष्टा मृतो द्विजः ।
ईदृशीयं ममालक्ष्मीर्दहेदपि हि पावकम् ॥ २४ ॥
संपूर्णमपि चेदद्य प्रतरेयं महोदधिम् ।
सोऽपि नूनं ममालक्ष्म्या विशुष्येत् सरितां पतिः ॥ २५ ॥

अहं सीतामभ्यवपन्नः सीतापरित्राणमुद्दिश्याभिगतः मया रावणस्य रणे विध्वंसितरथच्छत्रो धरणीतले पतितश्च कृतः ॥१७॥१८॥१९॥२०॥

तस्य स्वरूपं विज्ञाय सीतासक्तां सीतासंबद्धां कथाञ्च श्रुत्वा ॥२१॥

द्विगुणीकृततापार्त्तः सीतावियोगजः जटायुवधजः तापश्चेति तापस्य द्वैगुण्यं तेनार्त्तो बभूवेति शेषः ॥ २२ ॥

एकमसहायं एकस्मिन्नूर्द्धतालक्षणे अयने श्वासमार्गे तत एव कृच्छ्रे मुहुर्मुहुर्निश्वसन्तमिति कतकसम्मतपाठेऽर्थः । एकमेकायने दुर्गे निश्वसन्तं कथञ्चनेति पाठे । दुर्गे लताकण्टकसंकीर्णे एकायने एकमार्गे पतित्वा कथञ्चन निश्वसन्तं मृतप्रायमित्यर्थः इति तीर्थः ॥ २३ ॥

ममालक्ष्मीर्मद्दुष्कर्मसंबद्धा अलक्ष्मीः पावकं सर्वदाहकमपि दहेत् किमुत मद्विधमित्यर्थः ॥ २४ ॥

नास्त्यभाग्यतरो लोके मत्तोऽस्मिन् सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २६ ॥
अयं पितुर्वयस्यो मे गृध्रराजो महाबलः * ।
शेते विनिहतो भूमौ मम भाग्यविपर्य्ययात् ॥ २७ ॥
इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः ।
जटायुषञ्च पस्पर्श पितृस्नेहं निदर्शयन् ॥ २८ ॥

निकृत्तपक्षं रुधिरावसिक्तं
तं गृध्रराजं परिगृह्य राघवः ।
क्व मैथिली प्राणसमा गतेति
विमुच्य वाचं निपपात भूमौ ॥ २९ ॥

**इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे जटायु-समागमो नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥**

एतद्दुःखपरितापशान्तये संपूर्णं महोदधिमपि प्रतरेयं तदा सोऽपि सरितांपतिर्नूनं निश्चयेन ममालक्ष्म्या विशुष्येत् ॥ २५ ॥
येनाभाग्येन वागुरा मृगादिबन्धनजालम् ॥ २६ ॥
पितुर्वयस्यः सखा ॥ २७ ॥
पितृस्नेहं पितरीव स्नेहम् ॥ २८ ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

* जरान्वितः इति वा पाठः ।

## अष्टषष्टितमः सर्गः ।

रामः प्रेक्ष्य तु तं गृध्रं भुवि रौद्रेण पातितम् ।
सौमित्रिं मित्रसम्पन्नमिदं वचनमब्रवीत् ॥ १ ॥
ममायं नूनमर्थेषु यतमानो विहङ्गमः ।
राक्षसेन हतः संख्ये प्राणांस्त्यजति मत्कृते ॥ २ ॥
अतिखिन्नः शरीरेऽस्मिन् प्राणो लक्ष्मण ! विद्यते ।
तथा स्वरविहीनोऽयं विक्लवं समुदीक्षते ॥ ३ ॥
जटायो ! यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४ ॥
किन्निमित्तो जहारार्य्यां रावणस्तस्य किं मया ।
अपराधं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् ।

रौद्रेण रक्षसा अनेन रक्षसां तमःप्राधान्यमेवेति सूचितम् । मित्रसम्पन्नं मित्रत्वेन सम्पन्नं सर्वजनेषु मैत्र्या युक्तम् ॥ १ ॥ २ ॥
तथा अतिखिन्नप्राण इव स्वरहीनो विक्लवेक्षणश्च ॥ ३ ॥
व्याहरितुं व्याहर्तुं वधं वधप्रकारम् ॥ ४ ॥
यमपराधं दृष्ट्वा तु प्रिया सीता हृता सोऽपराधस्तस्य मया किं

सीतया कानि चोक्तानि तस्मिन् काले द्विजोत्तम ! ॥ ६ ॥
कथं वीर्य्यः कथं रूपः किं कर्मा स च राक्षसः ।
क्व चास्य भवनं तात ! ब्रूहि मे परिपृच्छतः ॥ ७ ॥
तमुद्वीक्ष्य स धर्मात्मा विलपन्तमनाथवत् ।
वाचा विक्लवया * राममिदं वचनमब्रवीत् ॥ ८ ॥
सा हृता राक्षसेन्द्रेण रावणेन दुरात्मना † ।
मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९ ॥
परिक्लान्तस्य मे तात ! पक्षौ छित्वा निशाचरः ।
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ॥ १० ॥
उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव ! ।
पश्यामि वृक्षान् सौवर्णान् उशीरकृतमूर्धजान् ॥ ११ ॥

कृतः अपि तु न । अतः किन्निमित्त इति किं निमित्तं हृदि यस्य सः रावणः आर्य्यां जहार ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

किं कर्मेत्यस्योत्तरं मायामिति । वातेन दुर्दिनेन च संकुलाम् । ॥ ९ ॥ १० ॥

अन्यप्रश्नोत्तरासामर्थ्यं ध्वनयन् प्राणोपरोधमाह, उपेति । उशीरेण नलदेन कृता मूर्धजाः केशा येषां तान् सौवर्णान् वृक्षान् पश्यामि । तादृशसौवर्णवृक्षदर्शनं मरणचिह्नम् ॥ ११ ॥

---

* वाचातिसन्नया इति वा पाठः ।

† विहायसा इति वा पाठः ।

येन याति मुहूर्त्तेन सीतामादाय रावणः ।
विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥
विन्दो नाम मुहूर्त्तोऽसौ स च काकुत्स्थ ! नाबुधत् ।
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३ ॥
न च त्वया व्यथा कार्य्या जनकस्य सुतां प्रति ।
वैदेह्यां रंस्यसे क्षिप्रं हत्वा तं रणमूर्धनि ॥ १४ ॥
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ।
आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ ॥
पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च ।
इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः ॥ १६ ॥
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।

ज्योतिषज्ञानबलादाह, येनेति ॥ ११ ॥

कोऽसौ मुहूर्त्तस्तत्राह, विन्द इति । लाभार्थादिविन्दिर्निष्पन्नोऽसाविंत्याङ्गः । स च रावणो निजकर्माननुकूलं तं नाबुधत् । बुधिरवगमने इत्यस्य लुङि रूपम् । न केवलं मुहूर्त्तमहिमा इष्टप्राप्तिरेवापि तु शत्रुनाशोऽपीत्याह, झषेति । बडिशं गृहीत्वा झष इव क्षिप्रमेव विनश्यति वर्तमाननिर्देशेनातिसान्निध्यं विनाशस्य दर्शयति ॥ १३ ॥

अतो न चेति ॥ १४ ॥

असंमूढस्य मृतिकालेऽप्यभ्रान्तस्य रामं प्रत्यनुभाषतः उत्तरं भाषमाणस्य ॥ १५ ॥

त्यक्त्वा शरीरं गृध्रस्य प्राणा जग्मुर्विहायसम् ॥ १७ ॥
स निक्षिप्य शिरो भूमौ प्रसार्य्य चरणौ तथा ।
विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १८ ॥
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ।
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ॥ १९ ॥
बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ।
अनेन दण्डकारण्ये विशीर्ण*मिह पक्षिणा ॥ २० ॥
अनेकवार्षिको यस्तु चिरकालसमुत्थितः ।
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१ ॥
पश्य लक्ष्मण ! गृध्रोऽयमुपकारी हतश्च मे ।
सीतामभ्यवपन्नोऽयं रावणेन बलीयसा ॥ २२ ॥
गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।

इत्युक्त्वा एतावन्मात्रमुक्त्वा तद्दीर्घ्यतद्भवनादिकथनात् पूर्वमिति शेषः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

अस्मिन् दण्डकारण्ये बहूनि वर्षाणि सुखं वसतानेन पक्षिणेहैव दण्डकारण्ये विशीर्णं देहविशरणं प्राप्तम् ॥ २० ॥

अनेकवार्षिक इत्यस्यैव विवरणं चिरकालसमुत्थित इति ॥ २१ ॥

मे उपकारीत्यन्वयः । सीतामभ्यवपन्नः सीतां मोचयितुं प्रवृत्तः । ॥ २२ ॥ २३ ॥

---

* विचीर्णं इति वा पाठः ।

मम हेतोरयं प्राणान् मुमोच पतगेश्वरः ॥ २३ ॥
सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराः शरण्याः सौमित्रे ! तिर्य्यग्योनिगतेष्वपि ॥ २४ ॥
सीताहरणजं दुःखं न मे सौम्य ! तथागतम् ।
यथा विनाशो गृध्रस्य मत्कृते च परन्तप ! ॥ २५ ॥
राजा दशरथः श्रीमान् यथा मम महायशाः ।
पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥ २६ ॥
सौमित्रे ! हर काष्ठानि निर्मथिष्यामि पावकम् ।
गृध्रराजं दिधक्ष्यामि मत्कृते निधनं गतम् ॥ २७ ॥
नाथं पतगलोकस्य चितिमारोपयाम्यहम् ।
इमं धक्ष्यामि सौमित्रे ! हतं रौद्रेण रक्षसा ॥ २८ ॥
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।

सर्वत्र सर्वजातिषु ॥ २४ ॥

तथा आगतमिति च्छेदः। प्राप्तमित्यर्थः। मन्निमित्तं यो गृध्रविनाशस्तज्जं दुःखं यथा मां प्राप्तं सीताहरणजदुःखाद् गृध्रविनाशजं दुःखमधिकमिति भावः। तस्या पुनःप्राप्तिसंभावनासत्त्वादस्य तदभावाच्चेति तात्पर्य्यम् ॥ २५ ॥ २६ ॥

दिधक्ष्यामि दग्धुमिच्छामि सद्गतिसिद्धये। शयनार्थः ॥ २७ ॥ २८ ॥

व्यपरावर्तिनां संग्रामे इति शेषः। गम्यत इति गतिर्लोकः। यज्ञशीलानां लोकान् क्रमेण प्राप्य मदनुज्ञातः सन्ननुत्तमान्येभ्यः परे उत्तमा-

अपरावर्त्तिनां या च या च भूमिप्रदायिनाम् ॥ २९ ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।
गृध्रराज ! महासत्व ! संस्कृतश्च मया व्रज ॥ ३० ॥
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१ ॥
रामोऽपि सह सौमित्रिर्वनं यात्वा स वीर्य्यवान् ।
स्थूलान् हत्वा महारोहीननुतस्तार तं द्विजम् ॥ ३२ ॥
रोहिमांसानि चोद्धृत्य पेशीकृत्वा महायशाः ।

न सन्ति तान् लोकान् ब्रह्मणो लोकान् क्रममुक्तिदान् गच्छ । अनेन संकल्पमात्रात् कर्मानधिकृततिरश्चः साधनहीनस्यापि तल्लोकदानेन भगवान् रामः स्वस्वरूपांशे माययावृतज्ञान इति प्रलपतां मुखं ध्वस्तम् । शोकादि तु नटनमित्युक्तमेवासकृत् । तदुक्तं संस्कारमकरोत्तस्य रामो ब्रह्मविधानतः । स्वपदञ्च ददौ तस्मै सोऽपि रामप्रसादतः । हरेः सामान्यरूपेण प्रययौ परमं पदमिति जटायुषं प्रक्रम्य पाद्मे । एतेन तिरश्चामपि स्नेहादिना दाहादियुक्तमिति ध्वनितम् । सारूप्यमुक्तिलाभश्चोक्तः । मया मद्रूपेण सामान्यहरिरूपेण ॥ २९ ॥ ३० ॥ ३१ ॥

स प्रसिद्धमहिमा रामः महारोहीन् महामृगान् । रोहिशब्द इकारान्तोऽपि मृगवाची । तान् हत्वा पिण्डदानार्थं मांसमादायागत्यानु अनन्तरं तं द्विजं पक्षिणमुद्दिश्य पिण्डदानार्थं शाद्वलं दर्भं तस्तार ॥३२॥

तत्र तन्मांसान्युत्कृत्य पेशीकृत्वा पेशीकृत्य पिण्डं कृत्वा शकुनाय ददौ ॥ ३३ ॥

शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३ ॥
यत्तत् प्रेतस्य मर्त्यस्य * कथयन्ति द्विजातयः ।
तत् स्वर्गगमनं चिप्रं तस्य रामो * जजाप ह ॥ ३४ ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥ ३५ ॥
शास्त्रदृष्टेन विधिना जलं गृध्राय राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥

स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
* महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥

यत्तन्मन्त्रजातं प्रेतस्य मर्त्यस्य स्वर्गादिगमनमुद्दिश्य ब्राह्मणाः कथयन्ति तत् स्वर्गगमनं तद्गमनसाधनं तत्तस्य चिप्रं स्वर्गगमनाय रामो जजाप ॥ ३४ ॥ ३५ ॥

उक्तस्य सर्वस्यास्य स्नानपूर्वकत्वं दर्शयितुं पुनराह, शास्त्रेति। तत्र पाठक्रमादर्थक्रमस्य बलवत्त्वात् पूर्वं स्नानं तत उदकदानं ततः पिण्डदानमिति क्रमो बोध्यः ॥ ३६ ॥

पुण्यां पुण्यैकलभ्याम् अतएव सुखां सुखैकस्वभावाम् ॥ ३७ ॥

---

* मन्त्रञ्च इति वा पाठः ।
* याम्यसूक्तं इति वा पाठः ।

कृतोदकौ तावपि पक्षिसत्तमे
स्थिराञ्च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो
वनं सुरेन्द्राविव विष्णुवासवौ ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे दाहनं नाम अष्टषष्टितमः सर्गः ॥ ६८ ॥

पक्षिसत्तमे तद्विषये पितरीवेत्यर्थः । स्थिरां बुद्धिं तस्मिन् पितृवत्बुद्धिं निधाय सीताधिगमे सीताप्राप्तिसूचके निमित्ते मनः प्रवेश्य तादृशं निमित्तं दृष्ट्वा वनं जग्मतुः ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

# एकोनसप्ततितमः सर्गः ।



कृत्वैवमुदकं तस्मै प्रस्थितौ राघवौ तदा ।
अवेक्षन्तौ वने सीतां जग्मतुः पश्चिमां दिशम् ॥ १ ॥
तां दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥ २ ॥
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥
व्यतिक्रम्य तु वेगेन गृहीत्वा दक्षिणां दिशम् ।
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४
ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ ।

पश्चिमामित्यत्रोत्तरश्लोके दक्षिणामित्युक्तेर्नैर्ऋतीं जग्मतुरिति लभ्यते ॥ १ ॥

अविप्रहतं जनाक्षुण्णम् ॥ २ ॥

गुल्मादिभिः प्रवेष्टितम् अतएव सर्वत आवृतम् अतएव दुर्गं दुष्प्रवेशं गहनं वनरूपं पन्थानं प्रतिपेदतुरित्यन्वयः ॥ ३ ॥

वेगेनातिक्रम्य चलित्वा तन्महारण्यम् व्यतीयातौ व्यतिक्रम्य गतौ ॥ ४ ॥

क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५ ॥
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ।
नानावर्णैः शुभैः पुष्पैर्मृगपक्षिगणैर्युतम् ॥ ६ ॥
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिन्वतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणदुःखितौ ॥ ७ ॥
ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ।
क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८ ॥
दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ।
नानावृक्ष*समाकीर्णं सर्वं गहनपादपम् ॥ ९ ॥
ददृशाते गिरौ तत्र दरीं दशरथात्मजौ ।
पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १० ॥

गम्य गत्वा गहनं दुष्प्रवेशं क्रौञ्चारण्यं क्रौञ्चारण्याख्यं गहनं वनमिति वा ॥ ५ ॥

अनेकमेघानां घनः समूहः तत्प्रख्यं तद्वत् श्यामं सर्वतः प्रहृष्टमिव पुष्पविकासादिना तद्गतजन्तुहर्षेण वा तस्य प्रहृष्टत्वव्यपदेशः ॥६॥७॥

क्रौञ्चारण्यमतिक्रम्य तद्वनात् पूर्वेण त्रिक्रोशं गत्वा अन्तरे मध्ये मार्गे मतङ्गाश्रमं ददृशतुः । अथ घोरत्वादिविशेषणं तद्वनं मतङ्गाश्रमवनं दृष्ट्वा तत उच्यमानविशेषणां तत्र गिरौ दरीं ददृशाते ॥८॥९॥१०॥

* सक्त इति वा पाठः ।

आसाद्य च नरव्याघ्रौ दर्य्यास्तस्याविदूरतः।
ददर्शतुर्महारूपां राक्षसीं विकृताननाम् ॥ ११ ॥
भयदामल्पसत्वानां बीभत्सां रौद्रदर्शनाम्।
लम्बोदरीं तीक्ष्णदंष्ट्रां करालीं परुषत्वचम् ॥ १२ ॥
भक्षयन्तीं मृगान् भीमान् विकटां मुक्तमूर्धजाम्।
अवैक्षतां तु तौ तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः।
एहि रंस्यावहेत्युक्त्वा समालम्भत लक्ष्मणम् ॥ १४ ॥
उवाच चैनं वचनं सौमित्रिमुपगुह्य च।
अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ॥ १५ ॥
नाथ! पर्वतदुर्गेषु नदीनां पुलिनेषु च।
आयुश्चिरमिदं वीर! त्वं मया सह रंस्यसे ॥ १६ ॥

तस्याविदूर इति सन्धिरार्षः। तद्दरीसमीपे इत्यर्थः ॥ ११ ॥

बीभत्सां जुगुप्सिताम्। परुषत्वचं कर्कशत्वचं करालीं तुङ्गशरीराम्। करालोभीषणे तुङ्गे ॥ १२ ॥

विकटामतिस्थूलाकारां तत्र तत्रास्थानेऽपि निम्नोन्नतां वा ॥ १३ ॥

भ्रातूरामस्याग्रतो व्रजन्तं एहि रंस्यावहेत्युक्त्वेत्यत्र इकारलोप आर्षः। समालम्भत गृहीतवती ॥ १४ ॥

उपगुह्यालिङ्ग्य अयोमुखीत्यन्वर्थनाम। अहं ते तव लाभः निध्यादिवल्लाभरूपास्मि त्वं च मे प्रियो भर्त्तासि ॥ १५ ॥

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः ।
कर्णनासस्तनं तस्या निचकर्त्तारिसूदनः ॥ १७ ॥
कर्णनासे निकृत्ते तु विस्वरं विननाद सा ।
यथागतं प्रदुद्राव राक्षसी घोरदर्शना ॥ १८ ॥
तस्यां गतायां गहनं व्रजन्तौ * वनमोजसा ।
आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥
लक्ष्मणस्तु महातेजाः सत्यवान् शीलवान् शुचिः ।
अब्रवीत् प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २० ॥
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ॥
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥
तस्मात् सज्जीभवार्य्य! त्वं कुरुष्व वचनं हितम् ।

आयुस्थिरं चिरमायुः ॥ १६ ॥

कर्णनासस्तनमिति समाहारद्वन्द्वः ॥ १७ ॥

कर्णनासे इति सप्तमी ॥ १८ ॥

तस्यां गतायां पश्चाद् व्रजन्तौ गहनं दुष्प्रवेशं वनम् आसेदतुः प्रापतुः ॥ १९ ॥

बाहुर्वामः अनिष्टानि तत्सूचकानि ॥ २० ॥

सज्जीभव यत्तो भव संभ्रमं भयम् ॥ २१ ॥

---

* विशन्तौ इति वा पाठः ।

ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ २२ ॥
एष वञ्चुलको राम ! पक्षी परमदारुणः ।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ।
संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥
संवेष्टितमिवात्यर्थं गहनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभूद्वनमापूरयन्निव ॥ २५ ॥
तं शब्दं काङ्क्षमाणस्तु रामः खड्गी * सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६ ॥
आसेदतुश्च तद्रक्षस्तावुभौ प्रमुखे स्थितम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरे मुखम् ॥ २७ ॥

ततः कश्चिच्छकुनमप्याह, एष इति । वञ्चुलकः कण्ठवालः । वञ्जुलक इत्यपि पाठान्तरम् । अनेन युद्धमवश्यम्भावि जयस्त्वुभयं सूचितम् ॥ २२ ॥ २३ ॥

अन्वेषतोः सीतामिति शेषः । ओजसा सामर्थ्येन ॥ २४ ॥

तद्गहनं वनमत्यन्तं मातरिश्वना संवेष्टितं व्याप्तमिव जातम् । ततस्तस्य वनस्य मध्ये शब्दोऽभवत् ॥ २५ ॥

तं शब्दं काङ्क्षमाणः । तदुत्पत्तिनिमित्तं काङ्क्षमाणः ॥ २६ ॥

आसेदतुर्दृष्टवन्तौ । विवृद्धं विवृद्धाकारम् । अशिरोग्रीवम् ।

---

* तस्थौ इति वा पाठः ।

रोमभिर्निशितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिस्वनम् ॥ २८ ॥
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥
एकेनोरसि घोरेण नयनेन सुदर्शिना ।
महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३० ॥
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विजान् ।
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥ ३१ ॥
कराभ्यां विविधान् गृह्य ऋक्षान् पक्षिगणान् मृगान् ।
आकर्षन्तं विकर्षन्तमनेकान् मृगयूथपान् ॥ ३२ ॥

अंदृश्यमानशिरोग्रीवम् । अतएव कवन्धम् । अन्वर्थतन्नामकम् । उदरे मुखम् अमूर्धमस्तकादित्यलुक् ॥ २७ ॥

निशितैरित्यस्य विवरणं तीक्ष्णैरिति उपलक्षितमिति शेषः । रोमभिर्निबिडैस्तीक्ष्णैरिति क्वचित्पाठः ॥ २८ ॥

उच्यमानविशेषणेन ललाटस्थेनैकेन नयनेनोरःप्रदेशान्तर्गतशिरस्त्वात् उरसि उरःप्रदेशेऽन्तरुपलभ्यमानेन नयनेनोपलक्षितं मुखं लेलिहानं महापक्ष्मेणेत्यार्षम् ॥ २९ ॥ ३० ॥

विकुर्वाणं विक्षिपन्तम् ॥ ३१ ॥

आकर्षन्तम् इष्टान् मृगानाभिमुख्येन कर्षन्तम् अनिष्टान् मृगान् मुञ्चन्तम् ॥ ३२ ॥

स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः।
अथ तं समतिक्रम्य क्रोशमात्रं ददर्शतुः ॥ २३ ॥
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम्।
कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ २४ ॥
स महाबाहुरत्यर्थं प्रसार्य्य विपुलौ भुजौ।
जग्राह सहितावेव राघवौ पीड़यन् बलात् ॥ २५ ॥
खड्गिनौ दृढ़धन्वानौ तिग्मतेजौ महाभुजौ।
भ्रातराविव संप्राप्तौ कृष्यमाणौ महाबलौ ॥ २६ ॥
तत्र धैर्य्याच्च शूरस्तु राघवो नैव विव्यथे।
बाल्यादनाश्रयाच्चैव लक्ष्मणस्त्वभिविव्यथे ॥ २७ ॥
उवाच च विषण्णः सन् राघवं राघवानुजः।
पश्य मां विवशं वीर! राक्षसस्य वशं गतम् ॥ २८ ॥

प्रपन्नयोः पन्थानमिति शेषः आवृत्य स्थितं तं ज्ञात्वा तद्भुजवेष्टनं समतिक्रम्य दूरे स्थितौ तं क्रोशमात्रं ददर्शतुः ॥ २३ ॥

भुजाभ्यां जन्तून् संवृणोतीति भुजसंवृत् तं संस्थानाद्देहस्थित्या अशिरस्कत्वलक्षणकबन्धवत् स्थितम् ॥ २४ ॥

सहितौ नैकमपि मुक्त्वेत्यर्थः ॥ २५ ॥

तिग्मतेजौ तीक्ष्णतेजसौ तादृशवेषधराविवेत्यर्थः। विवशं प्राप्तौ बलात् कर्षणं प्राप्तौ ॥ २६ ॥

तत्र तस्यामवस्थायां अनाश्रयात् धैर्य्यस्येति शेषः। धैर्य्यानालम्बनादित्यर्थः। तत्र हेतुर्बाल्यं बालबुद्धित्वं शुद्धसत्त्वाप्रधानत्वम्। अनाश्रय-

मयैकेन तु निर्युक्तः परिमुच्यस्व राघव ! ।
मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९ ॥
अधिगन्तासि वैदेहीमचिरेणेति मे मतिः ।
प्रतिलभ्य च काकुत्स्थ ! पितृपैतामहीं महीम् ॥ ४० ॥
तत्र मां राम ! राज्यस्थः स्मर्तुमर्हसि सर्वदा ।
लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ ४१ ॥
मास्म त्रासं वृथा वीर ! नहि त्वादृग्विषीदति ।
एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२ ॥
तावुवाच महाबाहुः कबन्धो दानवोत्तमः ।
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३ ॥
घोरं देशमिमं प्राप्तौ दैवेन मम चाक्षुषौ * ।

त्वांदिति पाठे आश्रितभूतस्य रामस्यापि कबन्धभुजावृतत्वादिति भावः ।
॥ ३७ ॥ ३८ ॥

निर्युक्तः निर्योजितरक्षोबलिः सन् त्वं किञ्चित्स्ववशमात्मानं परिमुच्यस्व पलायनेनेति शेषः । तस्यैव विवरणमुत्तरार्धं मां हीति । भूतबलिं महाभूताकाररक्षसे बलिमित्यर्थः ॥ ३९ ॥

अधिगन्ता प्राप्ता ॥ ४० ॥ ४१ ॥

एतस्मिन्नन्तरे इति लक्ष्मणविषादनिवृत्तिफलकरामाश्वासनसमये इति शेषः ॥ ४२ ॥ ४३ ॥

---

* भयादुपस्थितौ इति वा पाठः ।

वद त्वं कार्य्यमिह वां किमर्थं चागतौ युवाम्॥ ४४ ॥
इमं देशमनुप्राप्तौ क्षुधार्त्तस्येह तिष्ठतः।
सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५ ॥
मां तूर्णमनुसंप्राप्तौ * दुर्लभं जीवितं हि वाम्।
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः॥ ४६ ॥
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता।
कृच्छ्रात् कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ! ॥ ४७ ॥
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम्।
कालस्य सुमहद्वीर्य्यं सर्वभूतेषु लक्ष्मण ! ॥ ४८ ॥
त्वाञ्च माञ्च नरव्याघ्र ! व्यसनैः पश्य मोहितौ।

दैवेन दैवगत्या मम चाक्षुषौ चक्षुर्गोचरौ ॥ ४४ ॥

एवं कार्य्यादिकं पृष्ट्वा तदुपेक्ष्य स्वप्रयोजनं सम्पन्नमित्याह, इमं देशमिति। इह तिष्ठतः क्षुधार्त्तस्य मम भाग्यादिमं देशमनुप्राप्तौ ॥४५॥

ततः किं तत्राह, दुर्लभमिति ॥ ४६ ॥

मुखेन परिशुष्यतोपलक्षितं लक्ष्मणमुवाच। हे सत्यविक्रम कृच्छ्रात् कष्टात् कष्टतरं राज्यभ्रंशवनवासप्रियापहारादि प्राप्य स्थितयोरावयोस्तां प्रियामप्राप्यैव जीवितान्तायेदं व्यसनं प्राप्तं यदेवमतः सर्वेष्वपि भूतेषु कालस्य वीर्य्यं सुमहत् अनर्गलप्रचारमस्तीति शेषः॥ ४७ ॥ ४८ ॥

* ममास्यमनुसंप्राप्तौ इति वा पाठः

नहि भारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ! ॥ ४९ ॥
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५० ॥

इति ब्रुवाणो दृढसत्यविक्रमो
महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमुदग्रविक्रमः
स्थिरां तदा स्वां मतिमात्मनाकरोत् ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे
कबन्धदर्शनं नाम एकोनसप्ततितमः ॥ ६९ ॥

कृतो यतश्चाश्चेति। महाबलपराक्रमावपि व्यसनैर्दुःखैर्मोहितौ कालः करोतीति पश्य उक्तार्थस्यैव प्रपञ्चो नहीति। नातीति पाठान्तरम् ॥ ॥ ४९ ॥ ५० ॥

उदग्रविक्रमः उत्कटपराक्रमो रामः सौमित्रिमवेक्ष्य दीनमिति शेषः। स्वां मतिमात्मनात्मवैभवेन स्थिरामकरोत्। ईषदपि विषादं न प्राप्तवानित्यर्थः। अत्र लक्ष्मणस्यापि लोकव्यवहारनाट्यमेवेत्यन्ये ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

## सप्ततितमः सर्गः ।

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥
तिष्ठतं किन्नु मां दृष्ट्वा क्षुधार्त्तं क्षत्रियर्षभौ ।
आहारार्थं तु सन्दिष्टौ दैवेन हतचेतनौ ॥ २ ॥
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्त्तिंसमापन्नो विक्रमे कृतनिश्चयः ॥ ३ ॥
त्वाञ्च माञ्च पुरा तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ॥ ४ ॥
भीषणोऽयं महाकायो राक्षसो भुजविक्रमः ।
लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५ ॥

बाहुपाशपरिक्षिप्तौ बाहुभ्यां पाशाकारेण परितो व्याप्तौ ॥ १ ॥

क्षुधार्त्तं मां दृष्ट्वा भीतौ नु किं तिष्ठतं यतो मे आहारार्थं संदिष्टा-वतो न जीवनसम्भावनेत्यर्थः ॥ २ ॥ ३ ॥

पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥

भुजमात्रेण विक्रमो यस्य न त्वायुधेनेत्यर्थः । अतिजितं सर्वथा पराजितम् ॥ ५ ॥

निश्चेष्टानां वधो राजन्! कुत्सितो जगतीपतेः ।
क्रतुमध्योपनीतानां पशूनामिव राघव! ॥ ६ ॥
एतत् संजल्पितं श्रुत्वा तयो क्रुद्धस्तु राक्षसः ।
विदार्य्यास्यं ततो रौद्रं तौ भक्षयितुमारभत् ॥ ७ ॥
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
अच्छिन्दन्तां सुसंहृष्टौ बाहू तस्यांसदेशयोः ॥ ८ ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः ।
चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९ ॥
स पपात महाबाहुश्छिन्नबाहुर्महास्वनः ।

अस्य बाहुच्छेद एव युक्तो न तु प्राणवियोजनमित्याह, निश्चेष्टानामिति । शस्त्रादिभिर्विक्रमहीनानां जगतीपतेः क्षत्रियस्य क्रतुमध्यं प्राप्तानां पशूनां वध इव । स यथा स्वर्गफलदोऽपि शास्त्रविहितोऽपि कुत्सितः सांख्यपातञ्जलाद्युक्तरीत्या अधर्मजनकत्वात् । लोकदृष्ट्या च कुत्सितः । एतेन तद्वधस्यापीषत्पापफलदता सूचिता । केचित्तु क्रतुमध्यापनीतानामिति पाठं अज्ञाजाड्येन कल्पयित्वा क्रतुमध्यादन्यत्र नीतानां वधो यथा कुत्सित इति व्याचक्षते ॥ ६ ॥

तयोरेतत् संजल्पितं श्रुत्वेति सम्बन्धः । भक्षयितुमारभत् । हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥

सुसंहृष्टौ कदलीकाण्डच्छेदेनेव तच्छेदेन हस्तसुखलाभात् ॥ ८ ॥

दक्षिणः समर्थः दक्षिणपार्श्वस्थो वा ॥ ९ ॥

खञ्च गाञ्च दिशश्चैव नादयञ्जलदो यथा॥ १०॥
स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः।
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः॥ ११॥
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः।
शशंस तस्य काकुत्स्थं कबन्धस्य महाबलः॥ १२॥
अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः।
अस्यैवावरजं विद्धि भ्रातरं माञ्च लक्ष्मणम्॥ २३॥
मात्रा प्रतिहते राज्ये रामः प्रव्राजितो वनम्।
मया सह चरत्येष भार्य्यया च महद्वनम्॥ १४॥
अस्य देवप्रभावस्य वसतो विजने वने।
रक्षसापहृता भार्य्या यामिच्छन्ताविहागतौ॥ १५॥
त्वं तु को वा किमर्थं वा कबन्धसदृशो वने।
आस्येनोरसिदीप्तेन भग्नजङ्घो विचेष्टसे॥ १६॥
एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तमं वचः।

गां भूमिम्॥ १०॥
कौ युवामिति पप्रच्छ पूर्वमप्राप्तोत्तरत्वात् पुनः प्रश्नः॥ ११॥१२॥
इक्ष्वाकुदायादः दशरथपुत्रः॥ १३॥ १४॥
यामिच्छन्तौ यामन्वेषयन्तौ॥ १५॥
विचेष्टसे चेष्टमानस्तिष्ठसीत्यर्थः॥ १६॥

उवाच वचनं प्रीतस्तदिन्द्रवचनं स्मरन् ॥ १७ ॥
स्वागतं वां नरव्याघ्रौ ! दिष्ट्या पश्यामि चाप्यहम् ।
दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥ १८ ॥
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद् यथा ।
तन्मे शृणु नरव्याघ्र ! तत्त्वतः शंसतस्तव ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे कबन्ध-
बाहुच्छेदनं नाम सप्ततितमः सर्गः ॥ ७० ॥

प्रीतः शापमोक्षकालप्रत्यभिज्ञानात् । तदिन्द्रवचनं वक्ष्यमाणम् ॥१७॥
बाह्वोर्बन्धनं ययोरंसदेशयोस्तौ बाहुबन्धनावंसदेशौ ॥ १८ ॥
यथाऽविनयात् । यादृशाविनयात् प्राप्तं तच्छृण्वित्यन्वयः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

## एकसप्ततितमः सर्गः ।



पुरा राम! महाबाहो! महाबलपराक्रम! ।
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ १ ॥
यथा सूर्यस्य सोमस्य शक्रस्य च यथा वपुः ।
सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥ २ ॥
ऋषीन् वनगतान् राम! त्रासयामि ततस्ततः ।
ततः स्थूलशिरा नाम महर्षिः कोपितो मया ॥ ३ ॥
स चिन्वन् विविधं वन्यं रूपेणानेन धर्षितः ।
तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ ४ ॥
एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ।
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ॥ ५ ॥

अचिन्त्यम् अचिन्त्यवैभवम् ॥ १ ॥

तदेवाह, यथेति । इदं रूपं रक्षोरूपं वैभवेन कृत्वा ॥ २ ॥

एवमुक्तः ॥ ४ ॥

एवं शब्दार्थं एतदेवेति । एतदेवरूपं नृशंसं क्रूरं विगर्हितं चास्त्वित्यवदत् ॥ ५ ॥

अभिशापकृतस्येति तेनेदं भाषितं वचः।
यदा छित्वा भुजौ रामस्त्वां दहेद्विजने वने ॥ ६ ॥
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम्।
श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण ! ॥ ७ ॥
इन्द्रशापादिदं रूपं प्राप्तमेवं रणाजिरे।
अहं हि तपसोऽग्रेण पितामहमतोषयम् ॥ ८ ॥
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत्।
दीर्घमायुर्मया प्राप्तं किं मां शक्रः करिष्यति ॥ ९ ॥
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम्।
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ॥ १० ॥

अभिशापकृतस्य मत्कर्तृक तत्प्रधर्षणेन त्वया कृतस्यास्य शापस्यान्तोऽभवत्विति याचितः। तेनैवं याचितेन तद्वच आह, यदेति। तदा त्वं विपुलमुत्तमं श्रिया विराजितं रूपं प्राप्स्यस इति तेन भाषितमिति सम्बन्धः। एवं कृतं मां दनोः पुत्रं विद्धीत्यन्वयः। श्रिया विराजितं पुत्रं दनुं त्वं विद्धि लक्ष्मणेति पाठान्तरम्। तदा श्रियाः श्रीनाम्नो दानवस्य पुत्रं दनुनामानमित्यर्थः॥ ६ ॥ ७॥

ननु कुत्सितरूपत्वे शापेऽपि कथं कबन्धरूपताप्राप्तिस्तत्राह, इन्द्रेति। तच्छापबीजमाह, अहमिति ऋषिशापतः घोररूपप्राप्त्यनन्तरमुग्रेण तपसा पितामहमतोषयं स्वकुलारातीन्द्रादिभयेनेति शेषः॥ ८॥

विभ्रमो गर्वः। तमेवाह, दीर्घमिति॥ ९॥

सक्थिनी च शिरश्चैव शरीरे संप्रवेशितम्।
स मया याच्यमानः सन्नानयद्‌ यमसादनम्॥ ११ ॥
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत्।
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः॥ १२ ॥
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम्।
स एवमुक्तः शक्रो मे बाहू योजनमायतौ॥ १३ ॥
तदा चास्यञ्च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत्।
सोऽहं भुजाभ्यां दीर्घाभ्यां संक्षिप्यास्मिन् वनेचरान्॥१४॥
सिंहद्वीपिमृगव्याघ्रान् भक्षयामि समन्ततः।
स तु मामब्रवीदिन्द्रो यदा रामः स लक्ष्मणः॥ १५ ॥

शतपर्वणा शतधारेण॥ १०॥

सक्थिनी नाभ्यधोभागोपलक्षणम्। शरीरे शरीरमध्यस्थे उदरभागे एवंभूतेनोर्द्धाधरव्यवहाररहितेन मया मरणं याच्यमानोऽपि तन्नाकरोत्॥ ११ ॥

किमिति नाकरोत्तत्राह, पितामहेति। तद्वचो दीर्घायुदानरूपम्। ॥ १२ ॥

वज्रेण त्वयाभिहतः जीवितुं कथं शक्त इत्यन्वयः। एवमुक्तः अनाहारस्याक्रियस्य कथं जीवनमित्युक्तः॥ १३ ॥

वनेचरान् वने सञ्चारवतः॥ १४ ॥ १५ ॥ १६ ॥

छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि।
अनेन वपुषा तात! वनेऽस्मिन् राजसत्तम! ॥ १६ ॥
यद् यत्पश्यामि सर्वस्य ग्रहणं साधु रोचये।
अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ॥ १७ ॥
इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः।
स त्वं रामोऽसि भद्रन्ते नाहमन्येन राघव! ॥ १८ ॥
शक्यो हन्तुं यथातत्त्वमेवमुक्तो महर्षिणा।
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ! ॥ १९ ॥
मित्रञ्चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना।
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ २० ॥
इदं जगाद वचनं लक्ष्मणस्य च शृण्वतः।

सर्वस्य ग्रहणं साधु रोचये न किञ्चिदप्यभक्ष्यबुद्ध्या त्यजामीत्यर्थः। ऋषेरिन्द्रस्य च वाक्यविश्वासादवश्यं रामो मम हस्ते ग्रहणमेष्यतीति मन्ये मन्यमानस्तिष्ठामि ॥ १७ ॥

मम देहन्यासे देहत्यागे कृतश्रमः कृतयत्नो रामो मम हस्ते ग्रहणमेष्यतीतीमां बुद्धिं पुरस्कृत्य सर्वस्य ग्रहणं साधु रोचये। अयमेव रामो भवेदिति बुद्ध्या किमपि न त्यजामीत्याशयः ॥ १८ ॥

सर्वथा दाहोत्तरं तव बुद्धिं मित्रं चोपदेक्ष्यामि ॥ १९ ॥

दनुना दनुनाम्ना ॥ २० ॥

रावणेन हृता भार्य्या सीता मम यशस्विनी ॥ २१ ॥
निष्क्रान्तस्य जनस्थानात् सह भ्रात्रा यथासुखम् ।
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ २२ ॥
निवासं वा प्रभावं वा वयं तस्य न विद्महे ।
शोकार्त्तानामनाथानामेवं विपरिधावताम् ॥ २३ ॥
कारुण्यं सदृशं कर्तुमुपकारेण वर्त्तताम् ।
काष्ठान्यानीय शुष्काणि काले भग्नानि कुञ्जरैः ॥ २४ ॥
धक्ष्यामस्त्वां वयं वीर! श्वभ्रे महति कल्पिते ।
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ २५ ॥
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ।
एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ॥ २६ ॥

वह्निसंस्कारं करिष्यामि मम साहाय्यं कुर्वित्याशयेनाह, इदमिति । ॥ २१ ॥

यथासुखं हृतेत्यन्वयः । नाममात्रम् श्रुतमस्य जटायोर्वाक्यादिति भावः ॥ २२ ॥

उपकारेण परोपकारेण वर्त्ततामस्माकं सदृशमुचितं कारुण्यं सीताहर्त्तृदेशादिकथनरूपमुपकारं कर्तुमर्हसि । दाहविषये त्वया चिन्ता न कार्य्या इत्याह, काष्ठानीति ॥ २३ ॥ २४ ॥

कल्पिते इहैव कृते येन कर्त्ता यत्र देशे ॥ २५ ॥

कल्याणं तत्त्वाख्यानरूपं दाह एव मे दिव्यज्ञानसाधनं तत् कुरु

प्रोवाच कुशलो वक्ता वक्तारमपि राघवम् ।
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥ २७ ॥
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ।
योऽभिजानाति तद्रक्षस्तद्वक्ष्ये राम ! तत्परम् ॥ २८ ॥
अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो ! ।
राक्षसं तु महावीर्य्यं सीता येन हृता तव ॥ २९ ॥
विज्ञानं हि महद् भ्रष्टं शापदोषेण राघव ! ।
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ ३० ॥
किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
तावन्मामवटे क्षिप्त्वा दह राम ! यथाविधि ॥ ३१ ॥
दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन ! ।
वक्ष्यामि तं महावीर ! यस्तं वेत्स्यति राक्षसम् ॥ ३२ ॥
तेन सख्यञ्च कर्त्तव्यं न्याय्यवृत्तेन राघव ! ।
कल्पयिष्यति ते वीर ! साहाय्यं लघुविक्रम ! ॥ ३३ ॥

ततः परं सर्वं वक्ष्यामीत्याह, एवमिति । कुशलो वक्ता । वक्तृताचातुर्य्यवान् वक्तारं प्रशस्तवक्तारम् ॥ २६ ॥ २७ ॥

यस्तां सखेति शेषः । तत्परं दाहात्परम् ॥ २८ ॥ २९ ॥

विज्ञानमतीन्द्रियविषयं　स्वकृतेनानुचितकर्मणा ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥

न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव!।
सर्वान् परिवृतो लोकान् पुरा वै कारणान्तरे ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे कबन्ध-रामसंवादो नाम एकसप्ततितमः सर्गः ॥ ७१॥

तेन यो राक्षसं ज्ञास्यति तेन न्याय्यवृत्तेन नीतिमर्च्चारिणेया ॥ ॥ ३३ ॥

कारणान्तरे कस्मिंश्चिन्निमित्ते जाते सतीत्यर्थः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः।

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ।
गिरिप्रदरमासाद्य पावकं विससर्जतुः॥ १॥
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः।
चितामादीपयामास सा प्रजज्वाल सर्वतः॥ २॥
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत्।
मेदसा पच्यमानस्य मन्दं दहत पावकः॥ ३॥
स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः।
अरजे वाससी बिभ्रन् माल्यं दिव्यं महाबलः॥ ४॥
ततश्चिताया वेगेन भास्वरो विरजाम्बरः।

प्रदरं गर्त्तमासाद्य कबन्धं प्रापय्य सर्वतः काष्ठानि दत्त्वा तत्राग्निं ददतुः॥ १॥ २॥

मेदसा पूर्णस्येति शेषः। मेदपूर्णत्वान्मन्ददाहः, दहत। अदहत्॥ ३॥

अरजे निर्मले॥ ४॥

उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५ ॥
विमाने भास्वरे तिष्ठन् हंसयुक्ते यशस्करे।
प्रभया च महातेजा दिशो दश विराजयन् ॥ ६ ॥
सोऽन्तरिक्षगतो वाक्यं कबन्धो राममब्रवीत्।
शृणु राघव ! तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७ ॥
राम ! षडुपक्रमयो लोके याभिः सर्वं विमृश्यते।
परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ ८ ॥
दशाभागगतो हीनस्त्वं हि राम ! स लक्ष्मणः।

चिताया उत्पपात। भास्वरः कान्तिमान्। सर्वेषु प्रत्यङ्गेषु कर-चरणादिषु भूषणानि यस्य ॥ ५ ॥

हंसयुक्ते रामकृतसंस्कारप्रभावेण पूर्वतपःप्रभावेण चैवंभूतं विमानं प्राप्तः ॥ ६ ॥

तत्त्वेन परमार्थेन उच्यमानमिति शेषः ॥ ७ ॥

अथ प्रतिज्ञातमुपायमाह, रामषड़िति। षडुपायः सन्धिविग्रहयाना-सनद्वैधीभावसमाश्रयाख्या लोके सन्ति। याभिर्युक्तिभिः सर्वं वस्तु-जातं राज्ञा विमृश्यते विमर्शं प्राप्यते। तत्र दशान्तेन दुर्दशापरिपाक-कालेन यः परिमृष्टः स दशाभागेन दशाभागं दुर्दशापरिपाकावस्थां प्राप्तेन सेव्यते इति नीतिः। तस्मात्त्वयाऽत्र उपायः समाश्रयः कार्य्य इत्यर्थः। परिभ्रष्ट इति पाठे दशान्तेन दुर्दशापरिपाककालेनार्थात् भ्रंशित इत्यर्थः ॥ ८ ॥

यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९ ॥
तदवश्यं त्वया कार्य्यः स सुहृत् सुहृदांवर ! ।
अकृत्वा न हि ते सिद्धिमहं पश्यामि चिन्तयन् ॥ १० ॥
श्रूयतां राम ! बक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११ ॥
ऋष्यमूके गिरिवरे पम्पापर्य्यन्तशोभिते ।
निवसत्यात्मवान् वीरश्चतुर्भिः सह वानरैः ॥ १२ ॥
वानरेन्द्रो महावीर्य्यस्तेजोवान् चामितप्रभः ।
सत्यसन्धो विनीतश्च धृतिमान् मतिमान् महान् ॥ १३ ॥
दक्षः प्रगल्भो द्युतिमान् महाबलपराक्रमः ।

नन्वहं दशाभागं प्राप्त इति कथं त्वया निर्णीतं तत्राह, दशाभागगत इति यतस्त्वं सलक्ष्मण एवहीनो राज्यादिनेत्यर्थः । यत् कृते यद्दशाभागनिमित्तं त्वया दारप्रधर्षणं प्राप्तं तेन त्वं ज्ञायते दुर्दशाभोगकालं प्राप्त इति ॥ ९

यदेवमतस्त्वया स सुहृद्दशाभागं प्राप्तः सुहृत्कार्य्यः । तत्करणावश्यकत्वे हेतुमाह, अकृत्वेति ॥ १० ॥

तादृशः सुहृत् क इत्यत आह, श्रूयतामिति ॥ ११ ॥

पम्पापर्य्यन्तेन पम्पाप्रदेशेन शोभिते चतुर्भिः मन्त्रिभिरिति शेषः ॥ १२ ॥

तेजोवान् प्रतापी अमितप्रभः अपरिच्छिन्नकान्तिः ॥ १३ ॥

भ्रात्रा विवासितो वीर! राज्यहेतोर्महाबलः॥ १४॥
स ते सहायो मित्रञ्च सीतायाः परिमार्गणे।
भविष्यति हि ते राम! मा च शोके मनः कृथाः॥ १५॥
भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा।
कर्त्तुमिक्ष्वाकुशार्दूल! कालो हि दुरतिक्रमः॥ १६॥
गच्छ शीघ्रमितो वीर! सुग्रीवं तं महाबलम्।
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव!॥ १७॥
अद्रोहाय समागम्य दीप्यमाने विभावसौ।
न च ते सोऽवमन्तव्यः सुग्रीवो वानराधिपः॥ १८॥
कृतज्ञः कामरूपी च सहायार्थी च वीर्य्यवान्।
शक्तौ ह्यद्य युवां कर्त्तुं कार्य्यं तस्य चिकीर्षितम्॥ १९॥

द्युतिमान् तद्गुणानां वास्तवत्वबोधनायोक्तस्यापि कस्यचित् पुनः कथनम्॥ १४॥

हे राम ते भविष्यति। हिर्निश्चये॥ १५॥

यद्भवितव्यं राज्यभ्रंशदारापहारादिदुःखं तदन्यथा कर्त्तुं केनापि न शक्यमिति। अतः शोके मनो मा कृथा इति शेषः। ते इत्यादीनां पुनरुक्तिस्तु रामदुःखेन तस्यापि दुःखितचित्तत्वान्न दोषाय॥ १६॥

तं गच्छ तं वयस्यं कुर्वित्यन्वयः॥ १७॥

परस्परं द्रोहपरिहारायाग्निसाक्षिकं सख्यं कार्य्यमित्याह, अद्रोहायेति॥ १॥

कृतार्थो वाकृतार्थो वा तव कृत्यं करिष्यति ।
स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २० ॥
भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ।
सन्निधायायुधं क्षिप्रमृष्यमूकालयं कपिम् ॥ २१ ॥
कुरु राघव ! सत्येन वयस्यं वनचारिणम् ।
स हि स्थानानि कार्त्स्न्येन सर्वाणि कपिकुञ्जरः ॥ २२ ॥
नरमांसाशिनां लोके नैपुण्यादधिगच्छति ।
न तस्याविदितं लोके किञ्चिदस्ति हि राघव ! ॥ २३ ॥
यावत् सूर्य्यः प्रतपति सहस्रांशुः परन्तप ! ।

तस्य तिर्य्यक्त्वात्तदवमतिः कुतो न कार्य्यमत्यत्र हेतुमाह, कृतज्ञ इति । ननु स किमर्थं मया सह मैत्रीं कुर्य्यादत आह, सहायार्थीति । नन्वा-भ्यामशक्ताभ्यां कस्तस्य सहायार्थ इत्यत आह, शक्तौ हीति । तस्य चिकीर्षितं कार्य्यं कर्तुं युवां शक्तावित्यन्वयः ॥ १९ ॥

ननु तस्य तिरश्चोऽस्मत्साहाय्ये का शक्तिस्तत्राह, स कृतार्थः त्वया कृतप्रयोजनः करिष्यमाणप्रयोजनोऽपि तव कार्य्यं सीतान्वेषणादिरूपं स करिष्यत्येव । तथा सामर्थ्ये प्रयोजकं तस्य कुलीनत्वमाह, स ऋक्षेति । पुत्रः क्षेत्रज इत्यर्थः ॥ २० ॥

तदेवाह, भास्करस्यौरस इति । कृतकिल्बिषः कृतवैरोऽतएव वालिनः शङ्कितोऽटति । तमभिसन्निधायायुधं सन्निधाय संस्थाप्य तेन सत्येन च तं कपिं वयस्यं कुरु । हि यतः स रक्षसां स्थानानि सर्वाणि जानाति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

स नदीर्विपुलान् शैलान् गिरिदुर्गाणि कन्दरान् ॥ २४ ॥
अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।
वानरांश्च महाकायान् प्रेषयिष्यति राघव ! ॥ २५ ॥
दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ।
अन्वेष्यति वरारोहां मैथिलीं रावणालये ॥ २६ ॥

स मेरुशृङ्गाग्रगतामनिन्दितां
प्रविश्य पातालतलेऽपि वाश्रिताम् ।
प्लवङ्गमानामृषभस्तवप्रियां
निहत्य रक्षांसि पुनः प्रदास्यति ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे कवन्ध-रामसंवादो नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥

अधिगमिष्यति ज्ञास्यति ॥ २५ ॥

रावणालये शोचन्तीमिति सम्बन्धः । अनेन ज्ञायते सर्वदिक्षु रावणालयाः सन्ति । तत्र किं दिक्स्थरावणालये इति ज्ञातुं सर्वदिग्-विचयनम् ॥ २६ ॥

अनिन्दितां निर्मलाम् । अनेन सीताशुद्धत्वं ज्ञापितम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
आरण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७० ॥

---

## त्रिसप्ततितमः सर्गः ।

दर्शयित्वा तु रामाय सीतायाः परिमार्गणे ।
वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥
एष राम ! शिवः *पन्था यत्रैते पुष्पिता द्रुमाः ।
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥
जम्बूप्रियालपनसा न्यग्रोधप्लक्षतिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥
धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ।
नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४ ॥

परिमार्गणे उपायं दर्शयित्वा पुनर्वाक्यमब्रवीत् ॥ १ ॥
यत्र प्रकाशन्ते तत्र गन्तुमेष शिवः अदुष्टः पन्थाः ॥ २ ॥
एते के तत्राह, जम्बू इत्यादि ॥ ३ ॥
धन्वनाधवाः नागवृक्षो नागकेसरः ॥ ४ ॥

---

* गिरेः इति वा पाठः ।

अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः।
तानारुह्याथ वा भूमौ पातयित्वा च तान् बलात् ॥ ५ ॥
फलान्यमृतकल्पानि भक्षयित्वा गमिष्यथ।
तदतिक्रम्य काकुत्स्थ! वनं पुष्पितपादपम् ॥ ६ ॥
नन्दनप्रतिमं त्वन्यत् कुरवस्तूत्तरा इव।
सर्वकालफला यत्र पादपा मधुरस्रवाः ॥ ७ ॥
सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा।
फलभारनतास्तत्र महाविटपधारिणः ॥ ८ ॥
शोभन्ते सर्वतस्तत्र मेघपर्वतसन्निभाः।
तानारुह्याथ वा भूमौ पातयित्वाथ वा सुखम् ॥ ९ ॥
फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति।
चंक्रमन्तौ वरान् शैलान् शैलाच्छैलं वनाद्वनम् ॥ १० ॥
ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथ।
अशर्करामविभ्रंशां समतीर्थामशैवलाम् ॥ ११ ॥

अग्निमुख्योऽरुष्करः। सुरक्ता रक्तचन्दनाः पारिभद्रको मन्दारः बलात् तान् वृक्षान् भूमौ पातयित्वा शाखां छित्वा भूमिपर्यन्तं संनाम्य ॥ ५ ॥ ६ ॥

अन्यद्गमिष्यथेति शेषः उत्तरकुरुवच्च ॥ ७ ॥

विटपाः शाखाः ॥ ८ ॥ ९ ॥

चंक्रमन्तौ चंक्रम्यमाणौ ॥ १० ॥

राम ! सञ्जातवालूकां कमलोत्पलशोभिताम् ।
तत्र हंसाः प्लवाः क्रौञ्चाः कुररास्चैव राघव ! ॥ १२ ॥
वल्गुस्वराणि कूजन्ति पम्पासलिलगोचराः ।
नोद्विजन्ते नरान् दृष्ट्वा वधस्याकोविदाः पुरा * ॥ १३ ॥
घृतपिण्डोपमान् स्थूलान् तान् द्विजान् भक्षयिष्यथ ।
रोहितांश्चक्रतुण्डांश्च नलमीनांश्च राघव ! ॥ १४ ॥
पम्पायामिषुभिर्मत्स्यांस्तत्र राम ! वरान् हतान् ।
निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान् ॥ १५ ॥
तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति ।
भृशं तान् खादतो मत्स्यान् पम्पायाः पुष्पसञ्चये ॥ १६ ॥

तीर्थमवतारमार्गः । अविभ्रंशं शैवलासम्बन्धेन पादभ्रंशाहेतुम् । ॥ ११ ॥

सञ्जातवालुकामिति दीर्घ आर्षः । प्लवा मण्डूकाः ॥ १२ ॥

वधस्याकोविदाः वधमजानानाः ॥ १३ ॥

द्विजान् पक्षिणः रोहिता मत्स्यविशेषाः चक्रतुण्डा नलमीनाश्च त एव ॥ १४ ॥

अयस्तप्तान् शूलाग्रे पक्वान् । अकृशा अनेके च कण्टका येषां विद्यन्ते तान् ॥ १५ ॥

---

* शुभाः इति वा पाठः ।

पद्मगन्धि शिवं * वारि सुखशीतमनामयम्।
उद्धृत्य स तदाक्लिष्टं रूप्यस्फटिकसन्निभम्॥ १७॥
अथ पुष्करपर्णेन लक्ष्मणः पाययिष्यति।
स्थूलान् गिरिगुहाशय्यान् वानरान् वनचारिणः॥ १८॥
सायाह्ने विचरन् राम! दर्शयिष्यति लक्ष्मणः।
अपां लोभादुपावृत्तान् वृषभानिव नर्दतः॥ १९॥
स्थूलां पीतांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम!।
सायाह्ने विचरन् राम! विटपी माल्यधारिणः॥ २०॥
शिवोदकञ्च पम्पायां दृष्ट्वा शोकं विहास्यसि।
सुमनोभिश्चितास्तत्र तिलका नक्तमालकाः॥ २१॥
उत्पलानि च फुल्लानि पङ्कजानि च राघव!।
न तानि कश्चिन्माल्यानि तत्र रोपयिता नरः॥ २२॥

पुष्पसञ्चये पद्मादिपुष्पसमूहे वर्त्तमानम्॥ १६॥

अतएव पद्मगन्धि अक्लिष्टं मलादिकल्मषहीनम्॥ १७॥

पुष्करपर्णेन पद्मपर्णेन उद्धृत्य मत्स्यान् खादतस्ते जलं पाययिष्यतीति संबन्धः! गिरिगुहासु शय्याशयनं येषां तान्॥ १८॥ १९॥

पीतान् जलपानं कृतवतः विटपी विटपिनः आर्षमेकत्वम्। माल्यधारिणः पुष्पवतः तान् दृष्ट्वा शीतोदकञ्च दृष्ट्वा शोकं हास्यसि॥ २०॥

अन्यान्यपि शोकहन्तॄणि दर्शनीयान्याह, सुमनोभिरिति॥ २१॥

* स्वादु इति वा पाठः

न च वै म्लानतां यान्ति न च शीर्य्यन्ति राघव ! ।
मतङ्गशिष्यास्तत्रासन् ऋषयः सुसमाहिताः ॥ २३ ॥
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ।
ये प्रपतुर्महीं तूर्णं शरीरात् स्वेदबिन्दवः ॥ २४ ॥
तानि माल्यानि जातानि मुनीनां तपसा तदा ।
स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ! ॥ २५ ॥
तेषां गतानामद्यापि दृश्यते परिचारिणी ।
श्रमणी शबरी नाम काकुत्स्थ ! चिरजीविनी ॥ २६ ॥
त्वान्तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् ।
दृष्ट्वा देवोपमं राम ! स्वर्गलोकं गमिष्यति ॥ २७ ॥
ततस्तद्राम ! पम्पायास्तीरमाश्रित्य पश्चिमम् ।

आरोपयिता गृहीत्वा धारयिता महावनत्वान्मनुष्यसञ्चाराभावेनेत्यर्थः ॥ २२ ॥

अम्लानाशीर्णत्वे हेतुर्मतङ्गेत्यादि ॥ २३ ॥

भारेण तप्तानां गुर्वर्थे आह्रियमाणवन्यभारेण श्रान्तानां तानि माल्यानीति विधेयापेक्षं क्लीवत्वम् ॥ २४ ॥ २५ ॥

शबरीनाम शबरीत्याख्या श्रमणी तापसी ॥ २६ ॥

त्वां दृष्ट्वा स्वर्गलोकं गमिष्यति पूर्वार्जिततपसस्त्वद्दर्शनस्य च माहात्म्यात् स्वर्गलोकोऽत्र ब्रह्मलोक इति वदन्ति । देवलोकमिति पाठेऽपि स एवार्थः ॥ २७ ॥

आश्रमस्थानमतुलं गुह्यं काकुत्स्थ ! पश्यसि ॥ २८ ॥
न तत्राक्रमितुं नागाः शक्नुवन्ति तदाश्रमम्।
ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम् ॥ २९ ॥
मतङ्गवनमित्येव विश्रुतं रघुनन्दन ! ।
तस्मिन्नन्दनसङ्काशे देवारण्योपमे वने ॥ ३० ॥
नानाविहगसंकीर्णे रंस्यसे राम ! निर्वृतः ।
ऋष्यमूकस्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः ॥ ३१ ॥
सुदुःखारोहणश्चैव शिशुनागाभिरक्षितः ।
उदारो ब्रह्मणा चैव पूर्वकालेऽभिनिर्मितः ॥ ३२ ॥
शयानः पुरुषो राम ! तस्य शैलस्य मूर्धनि ।

तदाश्रमस्थानं शबरीवासरूपं मतङ्गाश्रमस्थानं गुह्यम् आश्रमेषु गुह्यम् ॥ २८ ॥

नागा गजास्तत्र तदाश्रमे तस्मिन्मतङ्गाश्रमे इत्यर्थः। यद्यपि तत्र विविधा नागाः सन्ति तथापि मतङ्गस्य विधानात्प्रभावात् तदेकदेश-मतङ्गाश्रमे न सञ्चार इत्यर्थः ॥ २९ ॥

अतस्तच्च वनं मतङ्गवनमित्येव विश्रुतम्। देवारण्यं नन्दनादि तत्सदृशम् ॥ ३० ॥

पम्पायाः पम्पातीरवर्त्तिमतङ्गाश्रमादित्यर्थः ॥ ३१ ॥

सुदुःखारोहणोऽत्युच्चत्वात् इत्वन्तरमप्याह, शिशुभिर्नागैः सर्प-रभिरक्षितः। उदारो दाता। ब्रह्मणा पूर्वकाले सृष्टिकाले निर्मितः। विद्योदार्यव्रतपःप्राधान्येन निर्मितः ॥ ३२

य: स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ २३ ॥
यस्त्वेनं विषमाचार: पापकर्माधिरोहति ।
तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसा: ॥ २४ ॥
ततोऽपि शिशुनागानामाक्रन्द: श्रूयते महान् ।
क्रीड़तां राम ! पम्पायां मतङ्गाश्रमवासिनाम् ॥ २५ ॥
सक्ता रुधिरधाराभि: संहत्य परमद्विपा: ।
प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विन: ॥ २६ ॥
ते तत्र पीत्वा पानीयं विमलं चारु शोभनम् ।
अत्यन्तसुखसंस्पर्शं सर्वगन्धसमन्वितम् ॥ २७ ॥
निवृत्ता: संविगाहन्ते वनानि वनगोचरा: ।
ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ॥ २८ ॥
रुरूनपेतानजयान् दृष्ट्वा शोकं प्रहास्यसि ।

औदार्यमेव दर्शयति, शयान इति ॥ २३ ॥
अन्यमप्यतिशयमाह, य इति । तत्रैव पर्वतमूर्ध्नि एव ॥ २४ ॥
शिशुनागानां बालगजानाम् ॥ २५ ॥
रुधिरधाराभि: ईषद्रक्तमदधाराभि: सक्ता: संबद्धा: संहत्य संभूय सञ्चरन्ति पृथक्कीर्णाश्चरन्ति ॥ २६ ॥ २७ ॥
नीलमणिवत् कोमलकान्तीन् ॥ २८ ॥
अपेतान् मनुष्यं दृष्ट्वाऽपलायितान् । अजयान्० पराजयहीनान् । अनेनाक्रूरता । अथासाधारणं चिह्नमाह, रामेति ॥ २९ ॥

राम! तस्य तु शैलस्य महती शोभते गुहा ॥ ३९ ॥
शिलापिधाना काकुत्स्थ! दुःखञ्चास्याः प्रवेशनम्।
तस्या गुहायाः प्राग्द्वारे महान् शीतोदको ह्रदः ॥ ४० ॥
बहुमूलफलो रम्यो नानानगसमाकुलः।
तस्यां वसति धर्मात्मा सुग्रीवः सह वानरैः ॥ ४१ ॥
कदाचिच्छिखरे तस्य पर्वतस्यापि तिष्ठति।
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ ॥ ४२ ॥
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्य्यवान्।
तं तु खस्थं महाभागं तावुभौ रामलक्ष्मणौ ॥ ४३ ॥
प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके।
गम्यतां कार्य्यसिद्ध्यर्थमिति तावब्रवीत् स च ॥ ४४ ॥
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४५ ॥

स तत्कबन्धः प्रतिपद्य रूपं
वृतः श्रिया भास्करसर्वदेहः।

शिलापिधानेति गुहानामेति तीर्थः। विशेषणमित्यन्ये ॥ ४० ॥
तस्यां गुहायाम् ॥ ४१ ॥
कदाचित्पर्वतस्य शिखरेऽपि तिष्ठति। अपिधानञ्च ॥ ४२ ॥ ४३ ॥
प्रस्थितौ आवां सुग्रीवसमीपं प्रस्थितौ त्वं व्रजस्व पुण्यलोकमिति शेषः। अन्तिके समीपे वर्त्तमानं देवभूतं तावूचतुः। स ताभ्यां कृतानुमतिकः कबन्धः ॥ ४४ ॥ ४५ ॥

निदर्शयन् राममवेक्ष्य खस्थः
सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे कबन्धस्य स्वर्गारोहणं नाम त्रिसप्ततितमः सर्गः ॥ ७३॥

उक्तार्थोपसंहारः स तदिति। निदर्शयन्मार्गादिकमिति शेषः। किञ्चिद्दूरं गत्वा पुनः राममवेक्ष्य सख्यं कुरुष्वेत्युवाच ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

## चतुःसप्ततितमः सर्गः।



तौ कबंधेन तं मार्गं पम्पाया दर्शितं वने।
आतस्थतुर्दिशं गृह्य प्रतीचीं शवरात्मजौ ॥ १ ॥
तौ शैलेष्वाचितानेकान् चौद्रपुष्पफलद्रुमान्।
वीचन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलच्मणौ ॥ २ ॥
कृत्वा तु शैलपृष्ठे तु तौ वासं रघुनन्दनौ।
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३ ॥
तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम्।
अपश्यतां ततस्तत्र शबर्य्या रम्यमाश्रमम् ॥ ४ ॥
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम्।

यः कबन्धेन कथितस्तं मार्गं गृहीत्वा पम्पामुद्दिश्य प्रतीचीं दिशमातस्थतुः प्रतस्थतुः ॥ १ ॥

आचितानेकान् विद्यमानाननेकान् माधुर्यैरया चौद्रं मधु तत्तुल्यपुष्पफलान् ॥ २ ॥

उपतस्थतुः प्रापतुः ॥ ३ ॥ ४ ॥

सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥
तौ दृष्ट्वा तु तदा सिद्धा समुत्थाय कृताञ्जलिः ।
पादौ जग्राह रामस्य लक्ष्मणस्य च धीमतः ॥ ६ ॥
पाद्यमाचमनीयञ्च सर्वं प्रादाद् यथाविधि ।
तामुवाच ततो रामः श्रमणीं धर्मसंस्थिताम् ॥ ७ ॥
कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः ।
कच्चित्ते नियतः कोप आहारश्च तपोधने ! ॥ ८ ॥
कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् ।
कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ! ॥ ९ ॥
रामेण तापसी पृष्टा सा सिद्धा सिद्धसम्मता ।
शशंस शबरी वृद्धा रामाय प्रत्यवस्थिता ॥ १० ॥
अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया ।
अद्य मे सफलं जन्म गुरवश्च सुपूजिताः ॥ ११ ॥

तं शबर्य्याश्रमम् ॥ ५ ॥

सिद्धा सिद्धयोगा ॥ ६ ॥ ७ ॥

विघ्नास्तपोविघ्नाः कामादयः । कोपो नियतः निगृहीतः आहारश्च नियत इत्यनुकर्षः ॥ ८ ॥ ९ ॥

प्रत्यवस्थिता अभिमुखं स्थिता ॥ १० ॥

अद्य प्राप्ता तपःसिद्धिरित्यादिः शबर्य्या उपचारवत्परमार्थदृशावादः ॥ ११ ॥

अद्य मे सफलं तप्तं स्वर्गश्चैव भविष्यति।
त्वयि देववरे राम! पूजिते पुरुषर्षभ!॥ १२॥
तवाहं चक्षुषा सौम्य! पूता सौम्येन मानद!।
गमिष्याम्यक्षयान् लोकांस्त्वत्प्रसादादरिन्दम!॥ १३॥
चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः।
इतस्ते दिवमारूढ़ा यानहं पर्य्यचारिषम्॥ १४॥
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः।
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम्॥ १५॥
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः।
तञ्च दृष्ट्वा वरान् लोकानक्षयांस्त्वं गमिष्यसि॥ १६॥
एवमुक्ता महाभागैस्तदाहं पुरुषर्षभ!।

स्वर्गो ब्रह्मलोकः। देववरे सर्वान्तरात्मनि॥ १२॥

अक्षयान् लोकान् अपुनरावर्त्तिकान् ब्रह्मलोकान्॥ १३॥

चित्रकूटमिति। त्वदासक्तिवैभवमात्रादित्यर्थः। इत अस्मदाश्रमात्॥ १४॥

आगमिष्यति अनुग्रहार्थेति शेषः॥ १५॥

ते त्वया तं दृष्ट्वा अस्मत्सेवाफलभूतं तद्दर्शनं प्राप्य अक्षयान् लोकान् ब्रह्मलोकं अवयवाभिप्रायेण गुणाभिप्रायेण वा बहुवचनम्॥ १६॥

एवमुक्ताहं यतोऽतो मया त्वदर्थं वन्यं सम्यक् परीक्ष्य माधुर्य्ययुतं सञ्चितमित्यर्थः। तदुक्तं पाद्मे। शबरीं प्रस्तुत्य—

मया तु सञ्चितं वन्यं विविधं पुरुषर्षभ ! ॥ १७ ॥
तवार्थे पुरुषव्याघ्र ! पम्पायास्तीरसम्भवम् ।
एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् ॥ १८ ॥
राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ।
दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनाम् ॥ १९ ॥
श्रुतं प्रत्यक्षमिच्छामि सन्द्रष्टुं यदि मन्यसे ।
एतत्तु वचनं श्रुत्वा रामवक्त्रविनिःसृतम् ॥ २० ॥

प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे ।
पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् ॥
शिरसा धार्यंत्र पीत्वा च वन्यैः पुष्पैरथार्चयत् ।
फलानि च सुपक्वानि मूलानि मधुराणि च ॥
स्वयमास्वाद्य माधुर्यंत्र परीक्ष्य परिभज्य च ।
पश्चान्निवेदयामास राघवाभ्यां दृढव्रता ॥
फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददौ ॥

इति ॥ १७ ॥ १८ ॥

विज्ञाने आगतानागतज्ञाने अबहिष्कृतां तादृशज्ञानवतीमित्यर्थ इति तीर्थः । विज्ञाने ब्रह्मविद्यायां मैत्र्यायगादिवदबहिष्कृतां तत्राप्यधिकारिणीमित्यर्थ इति कतकः । विशिष्टं ज्ञानं येषां तेषां संबन्धो यस्यास्तत् संबोधनं हे विज्ञाने इति संबोध्य तां नित्यमबहिष्कृतां भोजनादिव्यवहारादिति शेषः । तद्दत्त आहारादि अङ्गीकृत्येति शेषः इत्यन्ये । किमाह तदाह । दनोरिति । महात्मनां त्वदाचार्याणां दनोः सकाशा

शबरी दर्शयामास तावुभौ तद्वनं महत्।
पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम्॥ २१॥
मतङ्गवनमित्येव विश्रुतं रघुनन्दन!।
इह ते भावितात्मानो गुरवो मे महाद्युते!।
जुहवांचक्रिरे नीड़ं मन्त्रवन्मन्त्रपूजितम्॥ २२॥
इयं प्रत्यक्स्थली वेदी यत्र ते मे सुसत्कृताः।
पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः॥ २३॥
तेषां तपःप्रभावेण पश्याद्यापि रघूत्तम!
द्योतयन्ति दिशः सर्वाः श्रिया वेद्यतुलप्रभा॥ २४॥

क्ष्यु तं प्रत्यक्षं कर्तुमिच्छामीति शेषः। सन्द्रष्टुं यदि मन्यसे सन्दर्शयितुं योग्यं यदि मन्यसे इत्यर्थः॥ १९॥ २०॥

मेघो वर्षुको यो घनस्तद्वन्नीलं। मिहसेचने बाहुलकात् घत्वम्॥२१॥

मतङ्गवनं तत्तपोमहिम्ना विश्रुतं प्रसिद्धं ते प्रसिद्धाः। मन्त्रपूजितं मन्त्रस्य गायत्र्या जपेन पूजितमतिशुद्धं नीडं देहपञ्जरम्। तीर्थमिति पाठेऽपि स एवार्थः। मन्त्रवत्तद्धोममन्त्रवत् यद्वा तीर्थमध्वरं जुहवाञ्चक्रिरे कृतवन्तः। यद्वा जुहवाञ्चक्रिरे तीर्थमध्वरं जुहवाञ्चक्रिरे कृतवन्त इत्यर्थः॥ २२॥

प्रत्यक्स्थली तन्नाम्नी वेदी यत्र यस्यां सुसत्कृता अत्यन्तं पूज्याः मे मत्संबन्धिनस्ते गुरवः श्रमादुद्वेपिभिः कम्पवद्भिर्वृद्धतरत्वात् करैः पुष्पोपहारं देवताभ्यः कुर्वन्ति॥ २३॥

अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ।
चिन्तितेनागतान् पश्य समेतान् सप्तसागरान् ॥ २५ ॥
कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह ।
अद्यापि न विशुष्यन्ति प्रदेशे रघुनन्दन ! ॥ २६ ॥
देवकार्य्याणि कुर्वद्भिर्यानीमानि कृतानि वै ।
पुष्पैः कुवलयैः सार्धं म्लानत्वं नतु यान्ति वै ॥ २७ ॥
कृत्स्नं वनमिदं दृष्टं श्रोतव्यञ्च श्रुतं त्वया ।

तेषां महाचार्य्यगणानां प्रभावेणेयं वेदिः तत्पूजाकाल इवाद्यापि सर्वा दिशो द्योतयन्ती अतुलप्रभा दृश्यते पश्य ॥ २४ ॥

आश्चर्य्यान्तरं दर्शयति, अशक्नुवद्भिरिति । सागरादितीर्थं गन्तुमशक्नुवद्भिरित्यर्थः । तत्र हेतुरुपवासश्रमालसैः । कृच्छ्रादिशास्त्रीयोपवासैर्जनितेन श्रमेणालसैः इदृशैस्तैश्चिन्तितेन तेषां ध्यानेन तदभिषेकतीर्थे आगतान् सप्तसागरान् समेतान् पश्य ॥ २५ ॥

आश्चर्य्यान्तरमाह, कृताभिषेकैरिति । न विशुष्यन्ति तीर्थवैभवात् तत्तपोवैभवाच्चेति भावः ॥ २६ ॥

आश्चर्य्यान्तरमाह, देवेति । कृतानि दत्तानि अतिहृद्कुवलयसहितानि पुष्पाणि नाद्यापि म्लानत्वं यान्ति तत्तपःप्रभावादिति शेषः ।
॥ २७ ॥

उपसंहरति कृत्स्नमिति । दृष्टं त्वया मया दर्शितम् । श्रुतं त्वया मया श्रावितम् । अभ्यनुज्ञाता त्वयेति शेषः । तत्तस्मात् एतत्कलेवरं त्यक्ष्यामीति इच्छामि ॥ २८ ॥

तदिच्छाम्यभ्यनुज्ञाता त्यच्याम्येतत्कलेवरम् ॥ २८ ॥
तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम्।
मुनीनामाश्रमो येषामहञ्च परिचारिणी ॥ २९ ॥
धर्मिष्ठाया वचः श्रुत्वा राघवः सहलक्ष्मणः।
प्रहर्षमतुलं लेभे आश्चर्य्यमिति चाब्रवीत् ॥ ३० ॥
तामुवाच ततो रामः शबरीं संशितव्रताम्।
अर्चितोऽहं त्वया भद्रे! गच्छ कामं यथासुखम् ॥ ३१ ॥
इत्येवमुक्ता जटिला चीरकृष्णाजिनाम्बरा *।
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने ॥ ३२ ॥
ज्वलत्पावकसंकाशा स्वर्गमेव जगाम ह।
दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ॥ ३३ ॥

येषां मुनीनामयमाश्रमः येषां चाहं परिचारिणी तेषां भावितात्मनां सदानुसंहितपरमात्मनां मुनीनां समीपं गन्तुमहमिच्छामि इति चाब्रवीत् ॥ २९ ॥

श्रुतार्थमुद्दिश्येति शेषः ॥ ३० ॥

संशितव्रतां तीक्ष्णव्रताम् ॥ ३१ ॥

आत्मानं हुताशने हुत्वा स्वाचार्य्योपदिष्टमार्गेणेत्यर्थः ॥ ३२ ॥

---

* तस्मिन् मुहूर्ते शबरी देहं जीर्णं विहाय तत्।
इत्यतिरिक्तं पाश्चात्त्याः।

दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ।
विराजयन्ती तं देशं विद्युत्सौदामनी यथा * ॥ २४ ॥
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत्पुण्यं शबरी स्थानं जगामात्मसमाधिना ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे शबर्य्याः स्वर्गमनं नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

स्वर्गं ब्रह्मलोकमेव ॥ २२ ॥ २४ ॥

यत्र ब्रह्मलोके तत् पुण्यस्थानं शबरी आत्मसमाधिना जगाम ब्रह्मसमाधिनेत्यर्थः ॥ २५ ॥

---

* प्रणम्य शिरसा रामं स्वर्गता सुप्रभानना ।
इति केचित्पठन्ति ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ।



दिवं तु तस्यां यातायां शबर्य्यां स्वेन तेजसा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥
चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥
दृष्टो मयाश्रमः सौम्य ! बह्वाश्चर्य्यः कृतात्मनाम् ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥
सप्तानाञ्च समुद्राणां तेषां तीर्थेषु लक्ष्मण ! ।
उपस्पृष्टञ्च विधिवत् पितरश्चापि तर्पिताः ॥ ४ ॥
प्रनष्टमशुभं यन्नः कल्याणं समुपस्थितम् ।
तेन त्वेतत्प्रहृष्टं मे मनो लक्ष्मण ! सम्प्रति ॥ ५ ॥
हृदये मे नरव्याघ्र ! शुभमाविर्भविष्यति ।
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ६ ॥

दिवं त्विति ॥ १ ॥

महात्मनां प्रभावं शबर्युक्तम् ॥ २ ॥ ३ ॥

तेषां मुनीनां सप्तानां समुद्राणां तीर्थेषु लोकोपकाराय तैः स्थापितेषु उपस्पृष्टं स्नानम् ॥ ४ ॥

तेन कल्याणोपस्थानेन ॥ ५ ॥

ऋष्यमूको गिरिर्यत्र नातिदूरे प्रकाशते।
यस्मिन् वसति धर्मात्मा सुग्रीवोऽंशुमतः सुतः॥ ७॥
नित्यं वालिभयात्त्रस्तश्चतुर्भिः सह वानरैः।
अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम्॥ ८॥
तदधीनं हि मे कार्य्यं सीतायाः परिमार्गणम्।
इति ब्रुवाणं तं वीरं सौमित्रिरिदमब्रवीत्॥ ९॥
गच्छावस्त्वरितं तत्र ममापि त्वरते मनः।
आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशाम्पतिः॥ १०॥
आजगाम ततः पम्पां लक्ष्मणेन सह प्रभुः।
समीक्षमाणः पुष्पाढ्यं सर्वतो विपुलद्रुमम्॥ ११॥
कोयष्टिभिश्चार्जुनकैः शतपत्रैश्च कीचकैः।
एतैश्चान्यैश्च बहुभिर्नादितं तद्वनं महत्॥ १२॥
स रामो विविधान् वृक्षान् सरांसि विविधानि च।
पश्यन् कामाभिसन्तप्तो जगाम परमं ह्रदम्॥ १३॥
स तामासाद्य वै रामो दूरात्पानीयवाहिनीम्।

शुभं मिश्रलाभादि॥ ६॥
अंशुमतः सूर्यस्य॥ ७॥
त्वरे त्वरामि॥ ८॥ ९॥
ममापि त्वरते पम्पादर्शने॥ १०॥ ११॥ १२॥ १३॥
पानीयवाहिनीं  पानार्हातिमधुरमुपीतनिर्मलजलवाहिनीम्।

मतङ्गसरसं नाम ह्रदं समवगाहत ॥ १४ ॥
तत्र जग्मतुरव्यग्रौ राघवौ हि समाहितौ ।
स तु शोकसमाविष्टो रामो दशरथात्मजः ॥ १५ ॥
विवेश नलिनीं पम्पां पङ्कजैश्च समावृताम् ।
तिलकाशोकपुन्नागबकुलोद्दालकाशिनीम् ॥ १६ ॥
रम्योपवनसम्बाधां रम्यसम्पीडितोदकाम् ।
स्फटिकोपमतोयां तां श्लक्ष्णवालुकसन्तताम् ॥ १७ ॥
मत्स्यकच्छपसम्बाधां तीरस्थद्रुमशोभिताम् ।
सखीभिरिव संयुक्तां लताभिरनुवेष्टिताम् ॥ १८ ॥
किन्नरोरगगंधर्वयक्षराक्षससेविताम् ।
नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम् ॥ १९ ॥
पद्मसौगंधिकैस्ताम्रां शुक्लां कुमुदमण्डलैः ।
नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव ॥ २० ॥
अरविन्दोत्पलवतीं पद्मसौगंधिकायुताम् ।
पुष्पिताम्रवनोपेतां बर्हिणोद्घुष्टनादिताम् ॥ २१ ॥

अनेन पम्पानदीति लभ्यते। वाहिनीमित्यस्य धारिणीमित्यर्थो वा मतङ्गसरसमित्यकारान्तः । तच पम्पायामेव प्रदेशभेदो गङ्गायां मणिकर्णिकेव ॥ १४ ॥ १५ ॥ १६ ॥

श्लक्ष्णा मृदुस्पर्शाः ॥ १७ ॥ १८ ॥ १९ ॥

कुवलयोद्घाटैः कुवलयसमूहैः कुथा गजास्तरणचित्रकंबलः ॥ २० ॥

स तां दृष्ट्वा ततः पम्पां रामः सौमित्त्रिणा सह ।
विललाप च तेजस्वी रामो दशरथात्मजः ॥ २२ ॥
तिलकैर्बीजपूरैश्च वटैः शुक्लद्रुमैस्तथा ।
पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ २३ ॥
मालतीकुन्दगुल्मैश्च भण्डीरैर्निचुलैस्तथा ।
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ २४ ॥
अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ।
अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः २५ ॥
ऋष्यमूक इति ख्यातश्चित्रपुष्पितपादपः ।
हरिर्ऋक्षरजो नाम्नः पुत्रस्तस्य महात्मनः ॥ २६ ॥
अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ।
सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ ! ॥ २७ ॥
इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमः ।
राज्यभ्रष्टेन दीनेन तस्यामासक्तचेतसा ।

कथं मया विना सीतां शक्य लक्ष्मण ! जीवितुम् ॥ २८ ॥

अरविन्दपद्मयो रक्तश्वेतविषयत्वेन भेदः ॥ २१ ॥
विललाप सीतावियोगादिति शेषः ॥ २२ ॥
शुक्लद्रुमो लोध्रः ॥ २३ ॥
भण्डीरो वटः निचुलो वंजुलः । अतिमुक्तो माधवी लता ॥ २४ ॥
पूर्वोक्तः कबन्धोक्तः ॥ २५

इत्येवमुक्त्वा मदनाभिपीड़ितः स लक्ष्मणं वाक्यमनन्यचेतनम् *।
विवेश पम्पां नलिनीमनोरमां रघूत्तमः शोकविषादयन्त्रितः ॥२९॥
क्रमेण गत्वा प्रविलोकयन् वनं ददर्श पम्पां शुभदर्शकाननाम्।
अनेकनानाविधपक्षिसंकुलां विवेश रामः सह लक्ष्मणेन ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये आरण्यकाण्डे पम्पागमनं नाम पञ्चसप्ततितमः सर्गः ॥ ७५॥

तस्य प्रसिद्धतरस्य ऋक्षरजो नामकस्य पुत्रो हरिर्वानरः ॥ २६ ॥
॥ २७ ॥
इत्युवाच अन्तरान्तरा सीताशोकम् ॥ २८ ॥
उपसंहरति, इतीति। अनन्यचेतनः। नास्त्यन्यत्र सीतायाः चेतनं चित्तं यस्य सः। नलिनीभिर्मनोरमां पम्पां मतङ्गसरसप्रदेशवर्त्तिनीं विवेश ॥ २९ ॥
शुभदर्शं शुभदर्शनं काननं यस्यां तां पम्पां ददर्श। सर्वत इति शेषः। विवेश च। मतङ्गसरसावच्छेदेनेति बोध्यम् ॥ ३० ॥

विराधादिकबन्धान् तान् हत्वा स्वपदमादिशत्।
विचरन् दण्डकारण्ये भवारण्ये स मे गतिः ॥ १ ॥

---

* अदीनसत्त्वः इति वा पाठः।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके आरण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

आरण्यकाण्ड